|| श्रीरस्तु ||

# भासकथासारः ॥

## प्रथमो भागः ।

# BHASAKATHASARA

## Part I

---

BY

Y. MAHALINGA SASTRI M. A., B. L.

SAHITYA CHANDRASALA,

TIRUVALANGADU, (Tanjore Dist.)

---

*(Fourth Edition, 1200 Copies)*

SRINIVASA PRESS, THIRUVAIYARU.

---

June 1955

॥ श्रीरस्तु ॥

# भासकथासारः ॥

## प्रथमो भागः ।

# BHASAKATHASARA

## Part I

---

BY

Y. MAHALINGA SASTRI M. A., B. L.
SAHITYA CHANDRASALA,
TIRUVALANGADU, (Tanjore Dist.)

---

(*Fourth Edition, 1200 Copies*)

SRINIVASA PRESS, THIRUVAIYARU.

---

June 1955.

# FOREWORD

Sanskrit literature for all its great merit is deficient in simple prose narratives on interesting themes and it is therefore a matter for satisfaction that Mr. Y. Mahalinga Sastri should have conceived the happy idea of supplying a manifest want by presenting us with summaries of the narratives of the plays ascribed to Bhasa. Whatever their origin, the originality and interest of these dramas are beyond question, and no better introduction to their study could be imagined than these versions, which capture the spirit and attraction of the poet's work. The style is worthy of the subject matter ; it is natural, clear, precise, free from artificiality and complexity, and flows easily, avoiding the temptation to indulge in ornament for its own sake which renders so much of Sanskrit literature inaccessible to younger students. The book may confidently be commended as a valuable aid for the study of Sanskrit.

The University of Edinburgh
2nd February, 1938.

**A. Berriedale Keith.**

# CONTENTS

॥ श्रीरस्तु ॥

# भासकथासारः ॥



## प्रथमो भागः ।

## बालचरितम्

आपादितप्रलयसुप्तजगत्प्रबोधा
धिन्वन्तु सत्कविवचस्सुभगा मुरारेः ।
नाभिह्रदोच्छ्वसदुदारविरिञ्चिसद्म-
पद्मोदरप्रथमसौरभवीचयो नः ॥ १ ॥

तमालदलमेचकस्तरणिनन्दिनीखेलनः
स्मरालसनितम्बिनीवलयलोचनानन्दनः ।
भुवो भरणविभ्रमं दधदलीकगोपार्भकः
स कोऽपि मुरलीकलक्वणितमोहनः पातु वः ॥ २ ॥

आसीदखिलभुवनमण्डनायमाना शूरसेनेष्वखण्डश्रीनिधानं मथुराभिधाना राजधानी । तां किल परिपालयतो यदुवंशावतंसस्य राज्ञः प्रजानुरञ्जनव्यग्रस्योग्रसेनस्य कंसो नाम नृशंसस्तनय आसीत् ।

अथैष यौवनारम्भे वर्तमानः पापात्मा पितरं परिणतवयसं सिंहासनात् प्रच्याव्य, प्रक्षिप्य च बन्धने, स्वयमग्रहीद्राज्यधुराम् अपीडयच्च प्रजाः, अद्रुहदात्मसंबन्धिभ्यो वृष्णिकुलप्रसूतेभ्योऽपि, अभ्यवर्तत नयविहीने हीने मार्गे, अभवच्च साधुभीषणो दुर्जनोपसेवितः, यस्य नाम्नि श्रुतेऽपि जना उद्विजन्ते स्म।

२. स कदाचित् कृतापराधो मधूकमहर्षिणा, "स्वसुर्वसुदेवदयिताया देवक्या गर्भान्मृत्युमवाप्स्यसि" इति शप्तस्तौ दम्पती कारायां निगृह्य, प्रसूतमात्राणि च तयोरपत्यान्याच्छिद्य स्वयमवधीत्। एवमौग्रसेनिना क्रूरकर्मणा हतेषु षट्सु बालकेषु देवक्याः, लोकानामभयप्रदानार्थं देवरूपिण्यां तस्यां सुतविडम्बनया साक्षादेव रथाङ्गपाणिराविरासीत्। तस्मिन्नवसरे पुष्पमयी वृष्टिर्दिवः पपात, विनेदुर्देवतूर्याणि, ननृतुरप्सरसः, प्रसेदुः साधुमनांसि, मम्लावसुरश्रीः, दुरात्मनः कंसस्य दुरुदर्कसूचनानि निमित्तानि च संबभूवुः। तथा हि— उद्भ्रान्तविद्युद्दाममासीन्नभः, अतिरभसोच्चलितचण्डवातानुविद्धजलधरपटलनिर्घोषैः पतितहर्म्यशिखरा चकम्पे मेदिनी। अथ तैस्तैर्निमित्तैरानकदुन्दुभिः जातस्य रोहिणीरमणसुषुमातिशयमनोहरस्य बालकस्य महाप्रभावतामनुमिमानः, स्वस्मिन्नुत्प्रेक्षमाणश्च दैवानुकूल्यं, "सप्तमोऽयं मम दीर्घायुः मा यासीत् कंसेन मृत्युम्" इति निश्चित्य, कथमपि समाश्वासितायाः प्रणयिन्या अङ्कादादाय मन्दरगिरिप्रतिमगरिमाणं निरुपमानं तमात्म-

जन्मानम् अर्धरात्र एव प्रसुप्तजनात् सत्वरं नगरान्निरगात् ।

३. गच्छंश्च ज्योत्स्नोपरोधिनि तस्मिन् दुर्दिनान्धकारे, प्रभाववता कुमारेणोपदर्शितया प्रभया कृतोपकारः मध्येमार्गमापतितां कालिन्दीं स्वयमात्मानं द्विधा विभज्य दर्शिततलामयत्नेन संततार बालानुभावविस्मितः सस्मितो वसुदेवः। उत्तीर्णश्च परितो विलोकयन्नेष नन्दगोकुलोपकण्ठस्थमात्मानमन्वबुध्यत ।

४ तत्र च, "प्रभाते द्रक्ष्यामि कार्यसिद्धये व्रजाधिनाथमात्मनो मित्रं नन्दगोपम्" इति चिन्तयन् यावदसौ कस्यचिन्न्यग्रोधतरोर्मूलमाश्रयति विश्रमाय, तावदनेनानुस्मृतः स एव नन्दगोपो हस्ताभ्यां कांचिन्मृतदारिकामालम्ब्य रुदन् तत्प्रदेशमुपासदत् । स च समाहूय वसुदेवेन दारिकावृत्तान्तं पृष्टः, "अद्यार्धरात्रे अस्माकं कुटुम्बिन्या यशोदया प्रसूतेयं दारिका सद्यः प्राणैः व्ययुज्यत। सा च तपस्विनी क्लेशमोहिता नाद्यापि जानाति दारिका वा दारको वा जात इति। अहमपि घोषे श्वो निर्वर्तयिष्यमाणस्येन्द्रयज्ञस्य नाम गोपोत्सवस्यानया वार्तया विघ्नमनिच्छन् रहसि स्वयमेवैनामादाय निर्गतः" इत्युक्त्वा, काष्ठभूतमपि तं कलेबरं वत्सलत्वात् त्यक्तुमशक्नुवन् परं रुरोद ।

५. " सखे मा शोचीः। गृह्यतां तत्प्रतिरूपकः सप्तमोऽयं दीर्घायुर्मम पुत्रः । नास्ति मम पुत्रेषु भाग्यं, यस्य किल षट्सूनवः कंसेन

दुरात्मना निधनमुपनीताः। अस्मिन् कुरु निरन्तरं प्रेम। दग्धभूयिष्ठ-शेषं यादवानां कुलबीजमेतद्यत्नेन परिरक्ष्यताम्" इति तमाश्वासयन् वसुदेवो निजांशुकनिगूहितं राजीवलोचनं बालकं तस्मै स्वयमुपानयत्।

६ मृतदारिकाग्रहणादशुचिमात्मानं मन्वानो नन्दगोपो यदा घोषोचितमाचारमनुरुध्य पांसुना शुद्धिकर्म व्यधित्सत, तदा बालक-प्रभावेण धरणीं भित्त्वा युगप्रमाणा सलिलधारोत्थिता। तया च कृतशौचविधिः प्रमोदमेदुरः सादरं स नयनानन्दनं तमादित्सत नन्दनम्। किं तु यः समभिद्रवन्तमपि विदारयितुं वृषभं शृङ्गे गृहीत्वा मोचयति, पङ्कनिमग्नान् भाण्डशकटान् लीलयैवाघट्टयति, तस्यापि नन्दगोपस्य स बालो मन्दरगिरिसमानेन गरिम्णा दुर्वहो-ऽभवत्।

७. विस्मयमाने च तस्मिन्, भगवतो नारायणस्य दानवोप-मर्देष्वमोघवीर्याण्यसाधारणलाञ्छनानि पञ्चायुधानि शार्ङ्ग-शङ्ख-चक्र-कौमोदकी-नन्दकाः, वरवाहनं गरुडश्च, मनुष्यलोकमवतीर्णं बालकरूपं तमनुचरितुं गोपालकच्छद्मना घोष एवावतरिष्यन्तः समुपतस्थिरे। तेषु चक्रायुधं सुदर्शनो नाम भगवन्तमभिवन्द्य कार्यगौरवमपेक्षमाणो, "जनस्यास्य लघुत्वयोगात् प्रसादं कर्तुमर्हति देवः" इति प्रार्थयामास। ततो नन्दगोपेऽपि, "राजदारक! नमस्ते, नमस्ते। गोपजनस्य त्वां

ग्रहीतुं को वलपराक्रमः" इति दैन्यमालम्बमाने, स बालकः सद्यस्तस्य हस्ततुलनीयोऽभवत् ।

८. अथ समादाय बालकं प्रभातायां रजन्यां नन्दगोपो वसुदेवमापृच्छ्य कृतकृत्यमात्मानं मन्वानः प्रतिन्यवर्तत । निर्गते च तस्मिन्, मधुराभिमुखं प्रस्थास्यमानो वसुदेवः प्रत्यागतप्राणां रुदतीं नन्दगोपविसृष्टां दारिकामालक्ष्य, सादरमादाय च, पूर्ववद्दत्तावकाशां यमुनामुत्तीर्य देवकीसदनं प्राविशत् ।

९. श्रीनाथावतरणमहितायामस्यां रजन्यामौग्रसेनेश्चिरेणापि दूरीवभूव निद्रा । चिन्तायस्तचेतसः स्फुरन्ति स्म तस्य पुरतो मूर्तानीवात्मनो दुरितानि काश्चन चण्डालकन्यकाः, "अस्माकं कन्यकानां त्वया सह विवाहो भवतु" इत्यभीक्ष्णमश्लीलमाचक्षाणाः; याश्च निर्भर्त्सयमाने तस्मिन् सहसा अन्तरधीयन्त । ततश्चेतः समाधातुमभ्यन्तरं प्रविविक्षुमसुं निवारयन्नाविरभूदञ्जनराशिसवर्णो भीमोग्रदंष्ट्रवदनः पिङ्गलाक्ष उल्कां प्रगृह्य साक्षादेव मधूकशापः । स च "हृदयं तव प्रवेक्ष्यामि" इत्यभिधाय सहसा प्रनष्टः । इत्थंभूतैः प्रतिभासैर्व्याकुलित मनाः कंसो नयनविश्रममिच्छन् शय्यामुपगम्य क्षणान्निद्रावशो बभूव । तदा लब्धान्तरः स शापो विष्णोराज्ञेति प्रतिपाद्य राज्यश्रियं कंसशरीरान्निर्वास्य, ज्येष्ठाकालरात्रिमहानिद्राप्रभृतिभिः दुर्देवताभिः परिवृतः 'प्राप्नोमि मुनिशापस्त्वामचिरान्नाशमेष्यसि' इति गृणंस्तमाविशत् ।

अथोषसि प्रबुध्यमानः कंसः पुनः पुनः सम्भवद्भिर्भूकम्पोल्कापातवातोद्भ्रमणादिभिः किमप्यत्याहितमाशङ्कमानः कार्तान्तिकैः संमन्त्रयामास।

१० तैश्च—

"भूतं नभस्स्थलनिवासि नरेन्द्र नित्यं
कार्यान्तरेण नरलोकमिह प्रपन्नम्।
आकाशदुन्दुभिरवैः समहीप्रकम्पै-
स्तस्यैष जन्मनि विशेषकरो विकारः"॥

इति विज्ञापितो "ज्ञायतां या काप्यद्य प्रसूतवती वा" इति कञ्चुकिनमाज्ञापयामास। विदित्वाऽऽगतः स न्यवेदयत्, "देव देवकी खलु प्रसूतवती" इति। श्रुत्वैवं पापहृदयः कंसो मधूकशापत्रस्यन्मनाः, "बालिकेति कृपास्पदमिदमपत्यं जीवतु त्वत्प्रसादेन" इति बहुधा कृतप्रार्थनौ देवकीवसुदेवावनादृत्य, धात्र्या हस्तेन दारिकामानाय्य, सरोषमाच्छिद्य, "एष विफलो मयि मधूकशापः" इति भूमावविद्धयत्।

११. तत्क्षण एव तत्तोकमुद्यतशूलमुग्रदर्शनं कात्यायनीरूपमाबभार। कात्यायनीमावृत्य कुण्डोदरशूलनीलमनोजवादयस्तस्याः पार्षदाः समुदतिष्ठन्। अथ देवी, "कंसक्षयार्थमेव प्रसूताहं वसुदेवकुले। सपरिवारा च गोपालवेषप्रच्छन्ना घोष एवावतरिष्यामि भगवतो दामोदरस्य बाललीलाविभूतिमनुभवितुम्" इत्युदीर्य सद्यः सानुगा तिरोबभूव। तदा भयविस्मयाकुलहृदयः कंसो दुर्निमित्तानामेषां विपुलं शान्तिकर्म विधातुं मनो दधे।

१२ दामोदरप्रवेशेन नन्दगोकुले प्रतिक्षणमुल्लास समृद्धिरदृष्टपूर्वा। बहुलीभूतामिमां नन्दसूनुप्रशस्तिमाकर्ण्य, कात्यायनीवचांसि च स्मरन्, कंसः स्वशिक्षणार्थमवतीर्णममुं देवताविशेषमाशङ्क्य, तं बाल्य एव घातयितुं राक्षसान् न्ययूयुजत्। तत्र प्रथमं पूतना नाम राक्षसी दामोदरं नन्दगोपवधूवेषेण विषदिग्धस्तनं पाययन्ती पयसीव प्राणेष्वपि तेन चूषिता ममार। मासजात एष शकटासुरमाततायिनं पादाघातेन चूर्णयामास। अथ कतिपयमाससञ्जातचङ्क्रमणशक्तिर्नन्दकिशोरः तत इतः सञ्चरन्नज्ञातप्रवेशापक्रमणो गोपगृहेषु दधिक्षीरनवनीतादीनि गव्यानि प्रतिदिनमचूचुरत्, स्वैरं निजकेलिसब्रह्मचारिभ्यः सखिभ्यश्च विभाजयाञ्चक्रे। अस्य च दुर्नयं गोपाङ्गनाः यशोदायै न्यवेदयन्। तदाक्षिण्येन नन्दगोपी निरूपितागसं सुतमुलूखले रज्ज्वा बबन्ध। महाप्रभावो बालकस्तेनैवोलूखलेन प्रचलितः स्वमभिद्रोग्धुमुपस्थितौ वृक्षरूपिणौ यमलार्जुनौ नाम दानवावाघट्टयन्निपातयांबभूव। तदादितश्च गोपजनास्तं दामोदरनामानमाचख्युः। ततः क्रमेण, सङ्कर्षणं प्रसह्यापहर्तुकामः प्रलम्बः, क्वचित् तालीवनक्रीडासक्तं नन्दकुमारं जिघांसन् गर्दभवेषभीषणो धेनुकः, कदाचित् तुरगरूपेणाभिपतन् कृष्णं हिंसितुकामः केशी चेति त्रयः, कंसप्रियचिकीर्षवो दानवमुख्याः सङ्कर्षणेन कंसारातिना च स्वयूथ्यानां सरणिमनुप्रापिताः।

१३ अथ कदाचित् वाद्यमानेष्वातोद्येषु, प्रफुल्लकमलवदनाभिश्चम्पकगौरीभिर्वन्यकुसुमाकल्पमनोहराभिरालापमधुराभिर्गोपकन्याभिर्हल्लीसकमनुभवन्तम्, अनुरागपेशलहृदयं दामोदरमभियुयुजेऽरिष्टनामा, वृषभरूपी कोऽपि दानवः। स च, खुरपुटाघातैर्भूमितलं विदलयन्, शृङ्गाहतिभिर्नदीकूलान्यवकिरन्, समुद्धतेनाक्रमणेन कम्पयन्निव मेदिनीं, घोरेण हुङ्काररवेण निपातयन्निव गगनतलं, भयार्तैः प्रपलायितैः गोपजनैः सोद्वेगमीक्ष्यमाणः, कृष्णमुपागम्य, भीषणैर्निजाटोपैरप्यभीतमविस्मितं च तं, विलोक्य, "सारवान् खल्वयं बालः" इति चिन्तयन्, सावहेलमित्थमुदाजहारः, "भोः, बालस्त्वं, अतः खलु भयं न जानासि" इति। तमवधीरयन्नाह दामोदरः, "भो गोवृषाधम, किं बाल इति मां प्रधर्षयसि ? बालेन कृष्णसर्पेण दष्टः किन्न म्रियते ? किन्न बालः स पुरा यः क्रौञ्चं विदारयामास ? अपि च, रे मूर्ख, किं पल्लवमात्रेण वज्रेण न निपात्यते कठिनोपलसञ्चयो महाञ्शैलः ? एष यदि सपदि मद्भुजदण्डनिपीडितं त्वां भूपौ निपात्य न निष्पेषयिष्यामि नास्मि दामोदरः" इति।

१४ अथ प्रवृत्ते तयोर्महति युद्धे, स वृषभः पादेनैकेनावस्थितं तं बालकं स्थानाच्चलयितुमप्यशक्नुवन्नायासमूर्छितः पपात। समाश्वस्य पुनरचिन्तयत्, "अहो दुष्प्रसहोऽयं बालः। किन्तु रुद्रोऽयं भवेदुत शक्रः। तर्कयामि नूनमेष स एव पुरुषोत्तमो यस्त्रिलोकी-

रक्षणाय यत्र यत्र वयं जातास्तत्र तत्रास्मानुत्सादयितुं स्वयमाविर्भवति। हतस्याप्यनेन ममाक्षयो लोको भविष्यति" इति। समर्थ्य चेत्थं युद्धार्थं भूयः कृतसंभ्रमो गर्जन् स दुरात्मा दामोदरेण शृङ्गयोरादाय दूरोत्क्षेपणलीलया निपातितो, वज्राहत इवाञ्जनगिरिर्विशीर्यमाणो नासाऽऽस्य नेत्रविवरेभ्यो वमन् रुधिरधारां पञ्चत्वमवाप।

१५ तदात्वे ससम्भ्रमसापतन्तीभिर्गोपदारिकाभिः, 'अहो अत्याहितम्! सङ्कर्षणः खलु यमुनाह्रदनिवासिनमुद्वान्तगरलभीषणं दुष्टसर्पं कालीयं नियन्तुमभिपतति। तन्निवार्यतां साहसादयमबिलम्बेन" इति प्रार्थितो नन्दसूनुः, "पश्यन्तु पश्यन्तु भवत्यः। अहमेव तद्दर्पशमनं करोमि" इति वदन्नेव सत्वरं परिक्रम्य हेलया कालिन्दीसलिलमगाधमविशत्।

१६ अथावलोकयत्सु तीरमास्थाय विस्मयातङ्कमन्थरेषु गोपालकेषु, कतिपयैरेव निमेषैरप्रमेयप्रभावः स बालो महाभोगं वासुकिप्रतिमं तं नागराजं निष्क्रमय्य, पञ्चस्वपि तस्य शिरस्सु पर्यायनिपतच्चरणकमलः प्रारभत नृत्तलीलामनुभवितुम्। पराभिमर्शासहनः स रोषाविष्टः कालीयो भीषणं श्वसन्नुद्ववाम दहन्निव त्रिलोकीं करालां विषानलज्वालाम्। परं तु, महतापि प्रयासेन शिरस्पदाधिरूढं बालकं दग्धुमथवोत्रासयितुमप्यशक्नुवन्, विफलश्रमस्तमजय्यं साक्षादेव

नारायणमाकलय्य, अवनतशिराः स भोगी स्तुतिभिः क्षमापयितुमारेभे। व्यादिशंश्चात्मानं गरुडभयाद्यमुनाह्रदप्रविष्टं भगवन्तमभयं ययाचे। तस्मै प्रसन्नो दामोदरो गरुडभयनिवारणीं तन्मूर्धसु निजपदमुद्रां दत्वा, "संहृत्यात्मनो विषं ह्रदादस्मान्निस्सर" इत्याज्ञाप्य च, विस्मयमूकं निजोत्सुकं गोपालमण्डलमुपासदत्।

१७ एवं यमुनाजलं पानस्नानार्हमाकलय्य, तद्ध्रदोपान्तादुपाहृतैः कालीयभयादनपचितपूर्वैः पुष्पसञ्चयैरनुरञ्जिताभिर्गोपकन्याभिः परिवृतस्तिष्ठन् दामोदरस्तत्क्षणागतेन कंसभटेन, "मथुरायां निर्वर्तयिष्यमाणं धनुर्यागमुद्दिश्य, ससङ्कर्षणस्य भवतः सान्निध्यमिच्छति सद्य एव महाराजः" इति विज्ञापितो, निजबन्धुमित्रादीनामन्त्र्य साग्रजः कतिपयैर्गोपदारकैरनुगम्यमानो मथुरापुरीमभिप्रतस्थे।

१८ अथ प्रविशन्नेव कंसराजधानीं माधवो मार्गसङ्गतेभ्यो राजकुलरजकेभ्यो बस्त्राण्याच्छिद्य जग्राहेति तमभिहन्तुं महामात्रेणोत्पलापीडो नाम गन्धहस्ती संचोदितः। तमापतन्तमद्रिसन्निभं गजेन्द्रं हस्तोत्पाटिततदीयविषाणेनैव प्रहरन्नवधीन्नन्दसूनुः। ततो निरन्तरोत्सवव्यतिकरावसक्त-माल्यदामशोभितमुत्थापितागरुधूमाधिवासितावकाशं, राजमहापथमवगाढः, कन्दर्पसुन्दरः स पुरसुन्दरीणां नयनोत्सवमादधानः कृष्णो, मदनिकानाम्न्या कुब्जिकया राज्ञो गन्धवाहिन्या, बहुमानेन दत्तैर्गन्धविशेषैः स्वगात्रमनुलिप्य, तामपि हस्तावमर्शेन

विगतकुब्जभावामकार्षीत्। प्रविशंश्च, मालाकारापणांस्तेभ्यः पुष्पाण्याहृत्यात्मानं मण्डयामास। तदनु, सुरक्षितामपि कंसस्य यज्ञशालां बलाद् द्वाःस्थनिग्रहेणाक्रम्य, तत्र पूजार्थं स्थापितं धनुरादाय लीलयैव तदभाङ्क्षीत्।

१९ एतानि कृष्णाचरितानि वीरचरितानि निशम्य प्रबलोद्विग्नमानसः कंसश्चाणूरमुष्टिकौ मल्लवरौ मल्लयुद्धप्रसङ्गेन कृष्णरामौ घातयितुं न्ययोजयत्। अथाप्रतिमल्लौ सङ्कर्षणदामोदरौ, तौ मल्लौ निष्पिपिषतुः। क्षणादेव दामोदरः समुत्पत्य, प्रासादशिखरान्नियुद्धमवलोकयन्तं, स्वजनयित्रोर्बन्धनक्षेपक्रूरकर्माणं, निजाग्रजन्मवधमहापातकिनं, स्वस्मिन्नप्याततायिनं, प्रजापीडनं नृशंसचरितं कंसं, सरोषं शिरोरुहेषु प्रगृह्य भूमावपातयत्। अभिघातक्षतशरीरः सद्यः पञ्चत्वमाप कंसः।

अथ, हा हेति कृतस्वने तुमुलीभूते जनपदे, कंसहन्तारमभियोद्धुं संरभमाणे सेनासमूहे, सरभसमाविर्भूय वसुदेवः, "ममात्मजन्मानाविमौ विष्णोरंशभूतौ कंसवधार्थमवतीर्णौ सङ्कर्षणवासुदेवौ किन्न वित्थ" इत्युद्घोष्य प्रशान्ततामनयन्मण्डलानि। तदा कंसनिषूदनेन प्रहृष्टाः पातितकुसुमवृष्टयो देवाः नारदं पुरस्कृत्य भगवन्तं दामोदरमभिनन्दयामासुः। स तु कंसविजयी, कारागृहादुग्रसेनं विमुच्याभिषिच्य च महाराजपदे, तत्साहाय्येन वर्तमानो भुवनमङ्गलमाचरन् मथुरायां बन्धुमण्डलाभिनन्दितः सुखमुवास।

---

## मध्यमव्यायोगः

द्यूतापहारितराज्येष्वरण्यमधिवसत्सु पाण्डवेषु कदाचित् धौम्यमहर्षेः शतकुम्भं नाम यज्ञमनुभवितुं प्रस्थितैः भ्रातृभिः आश्रम-रक्षानियोगेन भीमसेनोऽवस्थापितः। स च व्यायामपरिचयार्थं विप्रकृष्ट-देशमनुदिनं गच्छति। एवमाचारं तमधिगत्यान्यस्मिन्नरण्यभागे वास्तव्या तत्परिगृहीतपूर्वा हिडिम्बा नाम राक्षसी, "विविक्त एष क्षणो लब्धः। पुनरपि प्राणेश्वरं दिदृक्षे। स च जानातु महाबलपराक्रमेणा-त्मनः सुतेन वर्धमानं पाण्डवपक्षम्" इति विचिन्त्य, पुत्रं भैमसेन्यमा-हूयादिदेश— "ममोपवासनिसर्गार्थमस्मिन् वनप्रदेशे कश्चिन्मानुषः परिमृग्यानेतव्यः" इति। अत्र च तस्याः अभिसन्धिः, यत्किल निर्मानुषे तस्मिन् विपिने क्वचित् भीमसेनमेवासावासाद्य बलादानयेत्। तदा च भीमो बलमस्य विजानीयादिति।

२ घटोत्कचस्तु, अनवगततदभिप्रायः मानुषमन्विष्यन् वनो-दरेषु भ्रमन्नाससाद यदृच्छया पाण्डवाश्रमस्य नेदीयसा वर्त्मना गच्छन्तं स्वमातुलेयस्योपनयनमनुभवितुं सपुत्रदारमभिप्रस्थितं केशव-दासं नाम वृद्धब्राह्मणम्। अथ जनन्याः पारणनिर्वहणमनेन विप्र-कुटुम्बकेन सम्पादयिष्यन् स तदभिदुद्राव।

३ बभ्रुकेशं, मधुनिभनयनं, स्फुरदुद्वृत्तदंष्ट्रं, जलदानीलं, महाकायं, भीमदर्शनं, तमनुपतन्तं वीक्ष्याशरणः सपुत्रदारः केशवदासस्त्रास। भयार्तमगतिकं शोचनीयावस्थं ब्राह्मणकुटुम्बकं तदुपासीदन् विमर्शे जातानुकम्पो घटोत्कचः केशवदासमाहूय समयमित्थमाचचक्षे, "पुत्रमेकमुत्सृजन् द्विपुत्रः पत्न्या सह मोचयिष्यसे। अन्यथा सकुटुम्बः क्षणेनैव विनाशमुपयास्यसि" इति।

४ वृद्धः प्राह— "जर्जरमिदं कृतकृत्यमात्मनः शरीरं सुतापेक्षी राक्षसाग्नौ होष्यामि" इति। तं निवारयन्ती ब्राह्मणी, "गृहीतफलेनैतेन शरीरेणार्यं कुलं च रक्षितुमिच्छामि" इति राक्षसाय स्वमात्मानमुपानिनीषत्। "स्त्रीजनो वा वृद्धो वा ममाम्बाया अनभिमत" इति तौ निराकुर्वति घटोत्कचे, त्रयोऽपि विप्रसूनवः गुरुरक्षणश्रद्धया तस्मै स्वं स्वं उपाहरन्। तदा, "ज्येष्ठमिष्टतमं न शक्नोमि परित्यक्तुम्" इति वृद्धः प्रथमं पुत्रं निवारयामास। ब्राह्मणी च कनिष्ठे दर्शितादरा तस्यानपायमैच्छत्।

५ उभाभ्यामपि परित्यक्तो मध्यमः पितरावभिवाद्य आमन्त्र्य च, राक्षसमुपासदत्। एवं प्राणपरित्यागकृतव्यवसायः स विप्रकुमारः, 'प्रकल्पितपरलोकस्यात्मनः पिपासाप्रतीकारं कृत्वाऽऽगच्छामि' इति घटोत्कचमापृच्छ्य जलाशयमन्विष्यन् ययौ। निष्क्रान्ते च तस्मिन् केशवदासः, मृत्युमुखे उपायनीकृतं पुत्रकं स्मारं स्मारं भृशमन्वतप्यत। तदा च, 'चिरायते खलु विप्रवटुः। अतिक्रामति मातुराहारकालः'

इति कृतत्वरो घटोत्कचः, "भो भो! मध्यम, मध्यम! शीघ्रमागच्छ" इति शब्दापयामास।

६ अत्रान्तरे व्यायामव्यग्रो वनान्तप्रतिनादितं तं महास्वनं निशम्य पाण्डवमध्यमः, "को नु खलु मामत्र शब्दापयति" इति साशङ्कं तत्प्रदेशमुपासदत्। निभाल्य च प्रवीरदर्शनं पुनस्तथैव शब्दापयन्तं घटोत्कचं, सोऽभ्यधात् "भोः प्राप्तोऽस्मि। कस्मादाहूयते" इति। "मध्यमं शब्दापयति मयि कस्त्वं प्राप्तः" इत्याचिक्षेप हैडिम्बेयः। स प्रत्यवादीत्– "अतः खल्वहं प्राप्तः न मत्तः परो मध्यमः"। शृणु तावत्—

"मध्यमोऽहमवध्यानामुत्सिक्तानां च मध्यमः।
मध्यमोऽहं क्षितेर्भद्र भ्रातॄणामपि मध्यमः॥
मध्यमः पञ्चभूतानां पार्थिवानां च मध्यमः।
भवे च मध्यमो लोके सर्वकार्येषु मध्यमः॥" इति।

७ एवं विवदमानयोरनयोर्विप्रसुतो न्यवर्तत। तं निशाम्य, "मध्यम, इत इत" इत्युपाह्वयति राक्षसे, वृद्धब्राह्मणः प्राप्तं महापुरुषं विदितपाण्डवाश्रमवृत्तान्तत्वाद्भीमसेनमेव निश्चित्य, "परित्रायस्व ब्राह्मणकुलम्" इति तं शरणयांबभूव। भीमो विप्रायाभयं दत्वा, "मुच्यतां तपस्वी सकुटुम्बोऽयं द्विजः" इति घटोत्कचमाख्यत्। "मातुर्मम हिडिम्बायाः आज्ञया गृहीतोऽयं मत्पिता वृकोदरश्चेत् स्वयमर्थयते तदापि न मुच्यते ; किमुत त्वदर्थे" इति प्रत्याख्यान्तं हैडिम्बेयं

यदृच्छयोपन्यस्तपुत्रभावं मनस्यभिनन्दन् स पुनरपि जगाद तत्सारं तुलयितुकामो मध्यमपाण्डवः, "क्षत्रियोऽहं मच्छरीरेण ब्राह्मणशरीरं विनिमातुमिच्छामि। त्यज्यतां विप्रकुमारः । अहं त्वामनुसरामि। अथवा यदि ते शक्तिरस्ति बलात्कारेण मां नय" इति। तथेति प्रतिपद्य स्वमुपावर्तमानं घटोत्कचं भीमः, "कस्ते पिता ? किमसौ शक्रः, उत शक्तिधरः ?" इति सव्याजमधिक्षिपन् प्रकोपयामास । क्रुद्धश्च घटोत्कचः प्रोत्खातैर्महीरुहैरुत्पाटितैश्च शैलकूटैस्तमविद्धयत्। चिरेणापि विफलश्रमस्तेन सह नियुद्धमकरोत्। कथञ्चिदपि नाशकत्तं हन्तुम्। ततो मातृप्रसादलब्धेन मायापाशेन तं बबन्ध। भीमसेनो मन्त्रं जपित्वा मायाममोचयत्। अन्ततो घटोत्कचः खिन्नः सन् समयमनुस्मार्य वृकोदरमुपच्छन्दयामास। समय इति निरुत्तरः सोऽप्यन्वगच्छत्।

८ हैडिम्बेयः स्वमातरमुपगम्य तस्या आहारार्थमासादितं मानुषमदर्शयत्। हिडिम्बा विहस्य प्राह, "उन्मत्तक, मदुपवासेनाराधनीयं दैवतमेव त्वयाऽऽनीतम् । आर्यभीमसेनः खल्वेषः। अभिवन्दस्व पितरम्" इति । स्वयमपि प्रणयिनमुपसृत्य जयशब्दमुदैरयत् । "भ्रष्टराज्यानामस्माकं वीरस्वा भवत्या महदुपकृतम्" इति सोऽपि तामभ्यनन्दत्। लज्जाविस्मयशबलमुखरागो घटोत्कचः "पुत्रचापलं क्षन्तुमर्हसि" इति पितरमभिवाद्य तन्नियोगेन वृद्धब्राह्मणमप्यवन्दत। ततः सत्कृतविसृष्टः केशवदासस्तेभ्य आशिषः प्रयुज्य स्वमार्गमनुससार। हिडिम्बा च स्वमनोरथः सुपर्यवसन्न इति तुतोष।

---



## पाञ्चरात्रम्

क्रमेणोत्तीर्णवनवाससमयबन्धेषु पाण्डुपुत्रेषु, प्रच्छन्नतया विराटनगरमधिवसत्सु, स्वजनवञ्चनामालिन्यं किञ्चिदिव प्रमार्ष्टुं कुरुराजो गुरुजनतोषणमनल्पविभूतिविश्राणनश्लाघनीयसमृद्धि यज्ञकर्मारेभे। तच्चामोदितुं विराटमन्तरेण समागतः सर्वो राजसमाजः, वासुदेवेन स्वप्रतिनिधित्वेन प्रेषितोऽभिमन्युश्च।

२ अथ सकलनरपाललोकसभाजितयज्ञपरिसमाप्तिः सुयोधनो ब्राह्मणसन्तर्पणावसरे धनुराचार्येण द्रोणेन तदभीष्टदक्षिणां ग्राहयितुमियेष। तदूर्जितवचनदत्तविस्रम्भो धर्मपक्षपाती च आचार्यः, "शकुनेरवलेपपारुष्यादुपलम्भितकान्तारभ्रमणानां निराश्रयाणां पाण्डवानां कुरु राज्यार्धसंविभागम्। एषैव मम भिक्षा दक्षिणा च भविष्यति" इति तमयाचत। निसर्गजिह्ममतिस्तु शकुनिः, "किमप्रस्तुतमुत्पाद्य युक्तेयं भवतः शिष्यवञ्चना" इत्याक्षेपवचनरौक्ष्यमाशिश्रिये। तस्यानार्यभावं विगर्हमाण अचार्यो धर्मातिक्रमे बलात्कारेण पैतृकं राज्यं हर्तुं समर्थान् पाण्डुपुत्रान् व्यादिशत्। दुराक्षेपिणा च दुर्योधनेन कलहायते स्म।

३ तदा कर्णगाङ्गेयावाचार्यमुपान्तिके प्रत्यबोधयताम् "मार्दवेनैवैष बाह्यो दुर्विनीतः शिष्यकार्यार्थिना भवता । अन्यथा विक्रियेत" इति । द्रोणोऽप्यनुचिन्त्य, सानुनयं पुत्रेणाभाष्य सुयोधनं, "धर्मोऽयमिति तव प्रभवतो मे वचनमिति च प्रशमय भेदं पाण्डवेषु" इत्युपादिशत् । दुर्योधनस्तु कार्यं शकुनिना समर्थयितुमियेष । तेन ह्याचार्यः कार्यलोभाभिमथः शकुनिमाहूयालिङ्ग्य च ससान्त्वनमात्मनो जरोपहतस्य क्रोधप्रायं वचनं क्षमयितुमभ्यर्थयामास । शकुनिस्तु प्रकृतिजिह्ममतिः सुयोधनेन पाण्डवानां राज्यार्धदानं प्रति निश्चयं पृष्टो न दातव्यमित्येवाब्रवीत् । अपि च सभामध्ये गुरोः प्रतिज्ञाय सत्यवचनात्प्रस्खलनमसम्मन्वानं सुयोधनम्, "अनृतवचनात्खलु त्वं मोचयितव्यः, तन्निश्शङ्को भव" इति समाधायोपसृत्य चाचार्यं व्यजिज्ञपत् "यदि पञ्चरात्रेण पाण्डवप्रवृत्तिरुपानीयते राज्यार्धं प्रदास्यति किल कुरुराज" इति ।

४ तदानीं भीष्मेण, "पौत्र, धर्मच्छलं मा भूत् । सत्यप्रतिज्ञो भव" इत्यनुनीयमानोऽपि दुर्योधनः शकुनिमेवान्ववादीत् । तेन च, "आद्वादशवत्सरादज्ञातगतयस्ते पञ्चरात्रेणोपलब्धव्या इत्यसुखनिर्वहणमेव । हन्त ! निष्फलाशंसोऽस्मि संवृत्तः" इति विमनायमाने धनुराचार्ये, कश्चन दूतः प्रविश्य अशस्त्रजनितकीचकभ्रातृशतनिधनव्यापदं विराटस्य यज्ञसभाजनानागमनकारणमुपन्यास्थत् । श्रुत्वैवं गाङ्गेयः— "अभीमस्यैतद्दुष्करं कर्म । दिष्ट्या

5

सुगमा पाण्डवप्रवृत्तिः" इति प्रोत्सहमानः आचार्यं पञ्चरात्राभिसन्ध्यभ्युपगमाय त्वरयामास । पश्यंश्च येन केनापि प्रकारेण विराटप्रधर्षणमेव तदाश्रितपाण्डुपुत्रप्रकाशनोपायं, सः दुर्योधनं "विराटस्य यज्ञानादरणाहितागसो गोग्रहणं प्रतीकारं विधेहि" इत्युद्योजयामास ।

५ अथ प्रातिष्ठन्त सर्वेऽपि यज्ञसभाजनागतैः सह राजभिः विराटनगरमुद्दिश्य समारूढरथतुरगाः सद्रोणभीष्मा धार्तराष्ट्राः । सन्निकृष्य च घोषं तुरगखुराकीर्णधूलीपटलप्रच्छन्नपरिस्पन्दाः परिवार्य राज्ञो वर्षवर्धनगोप्रदाननिमित्तं नगरोपवनवीथ्यां गोपालकैः सङ्क्षिप्यमाणं गोमण्डलं निर्दयमाहरन्ति स्म ।

६ अथ जन्मनक्षत्रमङ्गलक्रियाव्यापृते महाराजे, वित्रस्तेन गोपालकुलेन निवेद्यमानं गोधनहरणमुपश्रुत्य बृहन्नलाव्यञ्जनोऽर्जुनः कुमारेणोत्तरेणाधिष्ठितं रथं वाहयन्निर्गत्य, परिगृह्य च श्मशाने निगूढनिक्षिप्तं गाण्डीवं, दुर्योधनादीन् सन्ततशरधारावर्षेण कान्दिशीकतामनयत् । भीष्मद्रोणौ तदिदमर्जुनकर्मेति प्रत्यभिज्ञाय प्रहरणादुपरेमतुः । अभिमन्युः केवलं बाल्यादगणितभयो युद्धान्न निववृते । पुत्रमभियोद्धुं वैक्लव्यादसमर्थः पार्थो विमोचितगोमण्डलः परावृत्य रथं, भगवद्व्यपदेशेन युधिष्ठिरेण स्वस्थवाक्यैरुच्छेद्यमानयुद्धाभियोगसंभ्रमं राजानमुपातिष्ठत ।

७ तावता च विराटकुले सूदच्छद्मना स्थितो भीमो रणाजिरमाविश्य सङ्ग्रामभीममन्युमभिमन्युं हस्तेनावस्थापितादथादवतार्य परिष्वजमानो विराटसमीपमुपानिन्ये । तत्राभिमन्युर्भीमार्जुनौ विराटञ्च

शत्रुधिया पश्यन् विप्रलाञ्छनं युधिष्ठिरमेवाभिवन्द्य अवज्ञाभङ्गुरापाङ्गः सावष्टम्भगम्भीरमवतस्थे । ते तु तमभिभाषणकौतूहलेन बह्वनुयुञ्जाना मुखरयित्वा गुरुगौरवगर्भितन्यक्कारमधुरं रुष्यता क्षिपता च तेन सुतरां रेमिरे ।

८ एतस्मिन्नन्तरे, प्राविशद्बृहन्नळाप्रख्यापितालीकविक्रमप्रशंसा-ममृष्यमाणो यथावृत्तां सङ्ग्रामकथां राज्ञे निवेदयितुमाहितत्वर उत्तरः । प्रकाशयामास च बृहन्नळाव्यपदेशच्छन्नं गाण्डीविनमेव धार्तराष्ट्रविद्रा-वणम् । अथ निर्भिन्नप्रायं रहस्यमिति धनञ्जयः सूदमेव भीमसेनं, भगवन्तमेव च युधिष्ठिरं प्रव्याजीत् । अतः पाण्डवास्तीर्णप्रतिज्ञत्वात् स्वं स्वमाविश्चक्रुः । विस्मितः प्रहृष्टश्च विराटपतिः सत्यसन्धानां पाण्ड-वानां निवासेन स्वकुलं नष्टकल्मषममन्यत । अभिमन्युरपि, "दिष्ट्या गोग्रहणं स्वन्तं पितरो येन दर्शिताः" इति परितुष्य गुरून् सविनयमभि-वादयाञ्चक्रे । अथ प्रीतेन राज्ञा गोग्रहणविजयशुल्कार्थं प्रदिष्टामुत्तरा-मर्जुनः स्नुषार्थे प्रतिजग्राह । भीष्मादीनाञ्चाभिमन्युविवाहावेदनायोत्तर-मेव दूतं प्राहिणुतां विराटयुधिष्ठिरौ ।

९ अत्रान्तरे दुर्योधनसदसि सर्वे सौभद्रस्य हरणेन पराभूत-मात्मानं मन्यमाना भृशं विमनसस्तस्थुः । तत्प्रत्याहरणार्थं शकुनिव-र्जमन्ये संभ्रममायन् । तीव्रवेगेन केनापि पदातिनाऽतिबलेन स बाल उत्क्षिप्य नीत इति सूतेनावेदिते, भीष्मद्रोणौ भीमस्यैव महाबलस्य लीलैषेति प्रत्यपादयताम् । सूताहृतश्च शरः अर्जुननामाङ्कित आसीत् ।

पञ्चरात्राभ्यन्तर एव पाण्डवप्रकाशनमनभिनन्दन्नीर्ष्याकुलः शकुनिः, "अपि नाम भीमादन्यः प्रवीरो नास्ति, येनाभिमन्युग्रहणं घटते। किमिति न स्युरेते मार्गणा अर्जुनाभिधस्य कस्यचित्सामान्ययोधस्य। पाण्डवानां राज्यप्रदानार्थिनो यूयमनृतमुद्भावयथ" इति तन्मतं निराकरोति स्म।

१० इत्थं ससुयोधने शकुनौ खलभावेन विवदमाने, दूत्येन प्राप्त उत्तरो युधिष्ठिरसन्देशमाचख्यौ। पञ्चरात्राभिसन्धिः संपूर्ण इति दक्षिणां सद्यः प्रदीयमानामपैक्षत द्रोणाचार्यः। सुयोधनोऽपि पाण्डवेभ्योऽर्धराज्यप्रदानमभ्युपजगाम। तेन हि सर्वे प्रसन्ना बभूवुः।

---



# दूतवाक्यम्

अरण्यवासेन महद्दुःखमनुभूय संपूर्णसमयाः पाण्डवाः पुनः प्रतिन्यवर्तन्त । तेषां प्रतिश्रुतपूर्वं धर्म्यं दायाद्यं विभज्य दातुमसंमन्वानो बलदर्पादाहवकुतूहली लुब्धः सुयोधनो, "नियतं ते विप्रकृता हठमाश्रयेयुः" इत्युत्पश्यन् युद्धनिमित्तं सेनासन्नाहं चक्रे । मन्त्रयित्वा च स्ववर्ग्यैः पितामहं भीष्मं सेनापतित्वमङ्गीकारयामास । शान्तात्मा युधिष्ठिरः कुलक्षयकरं बन्धुमित्रादिभिः सह वृथाकलहं यथाशक्ति परिहरिष्यन् आहवद्दृप्तं सुयोधनं प्रति वासुदेवं दूत्यमग्राहयत् ।

२ बन्धुभिः सामन्तैश्च सुयोधने मन्त्रशालामधितिष्ठति, वासुदेवो दूत्येन तच्छिबिरद्वारि सन्निदधे । दूतस्यागमनं काञ्चुकीयो राज्ञे न्यवेदयत् । दुर्जनः सुयोधनः पाण्डवावलम्बभूतस्याच्युतस्य तत्रैव ग्रहणं जयौपयिकं मन्यमानः, "आनीयतां स दूतः" इत्यादिश्य मन्त्रयमाणान् राज्ञः समाज्ञापयत्, "योऽत्र केशवस्य प्रत्युत्थास्यति स मया दण्ड्यः" इति । स्वयमप्यालिखितद्रौपदीमानहरणवृत्तान्तं चित्रपटमानाय्य तस्मिन् दृष्टिविन्यासं कुर्वन्, "एवं केशवमनालक्ष्यैव स्थास्यामि" इति कृतनिश्चयोऽभवत् ।

३ अथ काञ्चुकीयप्रवेशिते वासुदेवे दृष्टमात्रे सर्वे भूपतयः संभ्रमविस्मृतात्मानस्तस्य प्रत्युत्तस्थुः । कृष्णसङ्कल्पेनाबुद्धिपूर्वक-मासनाच्चचाल सुयोधनोऽपि । अनन्तरमासीनेषु सर्वेषु, मिथः कुश-लानुयोगेष्वप्यवसितेषु, वासुदेवो धर्मसूनोः सन्देशं सुयोधनमा-श्रावयामास ।

"अनुभूतं महद्दुःखं संपूर्णः समयः स च ।
अस्माकमपि धर्म्यं यद्दायाद्यं तद्विभज्यताम् ।।" इति ।

स्वयमबोधयच्च तं हितम्—"मा तावत्परस्परविरोधवर्धनेन कुरुकुलं नामशेषतां नयतु भवान्" इति । तं प्रत्यभाषत दुर्व्यवसायपरुषमित्थं दुर्योधनः, "यमेन्द्रपवनाश्विनीदेवताप्रभवाणां कुन्तीसुतानां युधिष्ठि-रादीनां मया सह बन्धुतैव नास्ति । कथं पुनर्दायाद्यभाजनता ? अपि च राज्यं नाम रिपुभ्यो भुजबलेनाह्रियते, न तु कञ्चिद्याच्यते । यदि स्वबलपराक्रमे प्रत्ययः साहसं ते कुर्वन्तु" इति ।

४ तस्योत्सिक्तवचःप्रत्याख्यातः कृष्णस्तं साम्ना अप्रसाद्यं मत्वा परुषाक्षरैः संक्षोभयिष्यन् अर्जुनस्य विस्मयनीयानि वीरापदानान्यभि-वर्ण्य पुनरवोचत्— "मद्वाक्यादर्धराज्यमददन्महाप्रभावैः पाण्डवैर्हृ-ताखिलराज्यो विपत्स्यसे" इति। दुर्दान्तस्तच्छ्रुत्वा सुयोधनः, "पितृभुक्ते वीर्यगुप्ते स्वराज्ये तृणमपि न दास्ये" इति सक्रोधं प्रतिजानानः सुदूर मधिचिक्षेप वासुदेवं गोपालक इति, करिवृषभतुरगहननमात्रपौरुष-गर्वित इति, राजभिरनाभाष्य इति च । एवमवज्ञातः क्रुद्धो वासुदेवः

20057

सहसा निर्गन्तुकामः प्रचचाल। तद्वीक्ष्य सुयोधनो, "बध्यतां, बध्यतां केशवः" इति ससंभ्रमं स्ववर्ग्यान् प्रेरयन् तेष्वशक्त्या पराङ्मुखीभवत्सु द्विगुणीभूतरोषः स्वयमेवाभ्यपतत् कृष्णं बन्धुम्। तदा वासुदेवस्तस्य बालिशत्वमुपहसन् स्वं विश्वरूपमाविश्चकार। क्षणादेव क्वचित् ह्रस्वं क्वचिद्दीर्घं कदाचित्तिरोहितं पुनर्मन्त्रशालामावृत्य सहस्ररूपेण स्थितं च केशवं दृष्ट्वा मायामोहितः सुयोधनः साग्रहम्, "एकैकः केशवो बद्ध्यताम्" इति राज्ञश्चोदयन्, पश्यंश्च तान् स्वयमेव पाशैर्बद्धान्निपतितान्, "विद्ध्यामि कुहकं त्वां कार्मुकेण" इति शपथमावर्तयन् धनुरानेतुं निश्चक्राम।

५ अनुचितभाषिणं दर्पान्धं तं निग्रहीष्यन् कोपाविष्टो वासुदेवः स्मृतोपस्थितं सुदर्शनं प्राचोदयत्। स तु विमृश्य देवं व्यजिज्ञपत्।

"महीभारापनयनं कर्तुं जातस्य भूतले।
अस्मिन्नेवं गते देव ननु स्याद्विफलः श्रमः॥" इति।

६ एवमुद्बोधितो वासुदेवस्तद्वाक्यमभिनन्द्य तं विससर्ज। भगवतः क्षोभमवेत्य समापतिताञ्शार्ङ्गकौमोदकीपाञ्चजन्यनन्दकान् सरभसमुपासीदन्तं च तार्क्ष्यं मार्ग एव प्रशान्तरोषं भगवन्तमावेद्य सुदर्शनः प्रतिनिवर्तयामास।

७ अथ निष्फलदूत्यश्रमं निर्जिगमिषुं वासुदेवं धृतराष्ट्रः प्रविश्य पादयोर्निपत्य पुत्रापराधस्य कृते क्षमापयामास। तेन चार्घ्यपाद्यादिनोपचरितः प्रतिगृह्य पूजां प्रसन्नो वासुदेवः स्वशिबिरं प्राप।

---

## दूतघटोत्कचम्

अथ प्रवर्तमाने महति कुरुपाण्डवसम्पराये अन्तरा छलमाश्रित्य भीष्मो निहतः पाण्डवैरिति जातरोषा धार्तराष्ट्राः संशप्तकानीकानुद्रवणेन असन्निहितयोर्जनार्दनधनञ्जययोः एकाकिनः समरमवतीर्णस्य प्रक्षोभयतः सर्वराजमण्डलं सौभद्रेयस्य वधेन वैरनिर्यातनमगच्छन् । येन दुर्योधनः, "मर्मसु प्रहृतमर्जुनस्य, उन्मूलितो जनार्दनस्य मदः, निरस्तप्राया रिपवः, सञ्चालिता पाण्डवजयश्रीः, यद्द्वितीय इवार्जुनोऽसाववबालपराक्रमो बालो निहतः" इति साभिमानं ननन्द ।

२ श्रुतपौत्रकवधवृत्तान्तस्तु गान्धारीजानिरतिमात्रसन्तापलक्ष्यहृदयो निजपक्ष्यान्धर्मविघातिनो भृशमकुत्सयत । तदात्वे चाभिवन्दनागतान् दुर्योधनदुश्शासनशकुनीनाशीर्वचनेनाप्यनभिनन्दन्नसौ शुशोच, "अहह ! शिशुवधपातकिनामस्माकं नूनं वंशक्षयो भावी । अविषह्यपराक्रमो गाण्डीवी जनार्दनप्रणुन्नः किन्न कथाशेषतां नेष्यति कुरुकुलप्ररोहानपि । एकपुत्र्या मे दुश्शलायाः, बान्धवानां भवतां प्रसादाद्वैधव्यमासन्नमिव पश्यामि । यदभिमन्युवधनिमित्तीभूतेन जयद्रथेन पार्थमार्गणानामात्मा प्रथमलक्ष्यीकृतः । हन्त, एकस्मिन्नसहाये बाले

समुपेत्य प्रहरतां बहूनां क्षत्रबन्धूनां कथं न पतिता भुजाः" इति।

३ अथ कर्णमर्जुनप्रतियोद्धारमुपन्यस्य हृष्यतः सुयोधनस्य स्वपक्षपराक्रमे महतीं सम्भावनामवधीरयन्नुवाच धृतराष्ट्रः– "दहनेन्द्ररुद्रेभ्यः प्रतिपन्नावन्ध्यास्त्रदुराधर्षः क्व स फाल्गुनः, क्व चासौ तपस्वी व्याजोपलब्धविफलास्त्रबलः प्रमादी कर्णः। सर्वथा पुत्रवधामर्षितस्य पार्थस्य वैराग्निरस्मान् धक्ष्यति" इति।

४ तदात्वे समुत्थितस्य महतः शङ्खपटहसिंहनादरवोन्मिश्रस्य शब्दस्य प्रवृत्तिमुपलब्धुमादिष्टो भटः प्रविश्य व्यजिज्ञपत्– "संशप्तकानीकानपवाह्य प्रतिनिवृत्तः पार्थो निहतं पुत्रमङ्कस्थमश्रुभिः परिषिञ्चन् जनार्दनावभर्त्सितः—

'येन मे निहतः पुत्रस्तुष्टिं ये च हते गताः ।
श्वः सूर्येऽस्तमसंप्राप्ते निहनिष्यामि तानहम् ॥' इति

क्रूरां प्रतिज्ञामाददे। तद्व्यवसायतुष्टैः पार्थिवैः प्रहर्षात् कृतेन सिंहनादेन भूरपि चचाल, अम्बराच्च पेतुः प्रज्वलन्त्य उल्काः" इति।

५ तच्छ्रुत्वा निहतमेव जयद्रथं मत्वा व्यसनार्णवे निमज्जन्तं पितरं पर्यवस्थापयन्नाह सुयोधनः– "ननु प्रतिज्ञाव्याघाते प्रयत्नमातिष्ठामि। द्रोणोपदेशेन अभेद्यरूपं व्यूहं संयोज्य आच्छादयिष्ये जयद्रथं, यावत्सूर्येऽस्तमिते अप्राप्तकामास्ते पाण्डवाः खिन्नाः ज्वलनं विशन्ति" इति।

7

६ अस्मिन्नवसरे भगवता चक्रायुधेन कौरवशिबिरं प्रत्यभिमन्युवधमधिकृत्य ग्राहितसन्देशः प्रेषितो घटोत्कचः व्योममार्गेण क्षणादागत्य धृतराष्ट्रस्य प्रणतिपूर्वकमात्मानं न्यवेदयत्। सादरदत्तश्रवसं च तमाश्रावयामास जनार्दनसन्देशम् – "अभिमन्युनिधनाद्विषह्यमन्युः शतमन्युसूनुः सक्रोधव्यवसायः सर्वक्षत्रियविनाशाय गाण्डीवं धरिष्यति। तत्साम्प्रतमात्मनि धृतिमाधत्स्व, यथा ते पुत्रशोकसमुत्थितोऽग्निर्न दहेत्प्राणमयं हविः" इति। अथ सुयोधनं प्रत्युवाच च– "भवतापि श्रोतव्योऽयं जनार्दनस्य सन्देशः, यथा– 'तनयविनाशसमादीपितक्रोधस्योद्यतोग्रास्त्रस्यार्जुनस्य समरमुखे न कश्चिदजय्यः। तदवगच्छ प्राप्तं क्षत्रियाणां विनाशम्। इति" इति।

७ तदा "अरे राक्षस! उग्रस्वरूप! कथं मर्यादामतिलङ्घ्यास्मत्पुरतो रूक्षमेवं वदसि?" इति दुश्शासने तर्जयति, हैडिम्बेयः सावहेळमाह, "राक्षसेभ्योऽपि भवन्तः क्रूरतमाः, येषां जतुगृहादीपनकृष्णावमर्शनबालहननादीनि वीरलोकविगीतान्यपदानानि" इति। अथ तमाह सावज्ञं सुयोधनः— "परुषं वदन्नपि दूत इति घृणास्पदं भवान्। तत्पलायस्व क्षिप्रम्" इति। तेन च हैडिम्बेयः तथा चुक्रोध यथा धृतराष्ट्रो यदि नावारयिष्यन्नूनं साहसमकरिष्यत्। संस्तभ्य च रोषं, 'कः प्रतिसन्देशः' इत्यनुयुञ्जानः सुयोधनेनागादि, "हास्यमेतत्, यत् पार्थेनैकेन वः प्रभुः कृत्स्नं राजमण्डलं निहतं वेत्ति। किं वाङ्मात्रेण वसुन्धरा जीयेत। छिद्यतां बहुभाषणम्' तिष्ठत्वाजिभूमौ। सायकैस्तस्य प्रतिवचो दास्यामि" इति।

८ तद्वचोऽनुसन्धाय घटोत्कचो धृतराष्ट्रमापृच्छ्य, "भो भो राजानः! श्रूयतां जनार्दनस्य पश्चिमः सन्देशः, 'श्वः कृतान्तो वः पाण्डवरूपधारी सूर्यांशुभिः समुपैष्यति' इति। तस्मात् जागृत" इत्युच्चैरुद्घोषयन् शिबिरान्निर्जगाम।

---

## कर्णभारः

अथ तुमुलीभूते सङ्ग्रामे, पक्षद्वयाश्रयेष्वप्यसङ्ख्येषु महावीरेषु सङ्ख्यनिहतेषु, विमुक्तसिंहनादैर्नरपतिसिंहैः परिवृतः चतुरङ्गं महाबलं बलमनुविकर्षन् युधिष्ठिरपराजयक्रुद्धो विहितारातिविजयो विजयः समरभुवमवातरत्। तमभियोद्धुं दुर्योधनप्रियचिकीर्षया उद्धृतविपक्षशल्यः सशल्यो निर्जगामाङ्गराजः। काममप्रतिहतपराक्रमो युद्धधौरेयः कर्णः, तदात्वे कमपि हृदयपरितापमुवाह। यदसौ मातृवचननिवारितमात्मानमनुस्मृत्य, "कथं स्वावरजेष्वेव प्रहरामि" इति अनुक्रोशेनास्त ; यच्च, नाहं क्षत्रिय" इत्यतिसन्धाय विद्याग्रहणात्कुपितस्य गुरोर्जामदग्न्यस्य शापान्निर्वीर्याणीवालक्ष्यन्त काले सुशिक्षितान्यप्यस्त्राणि, दैन्येन प्रतिनिवर्तनमिव सूचयामासुर्गजतुरङ्गमाः, शङ्खदुन्दुभयश्च निश्शब्दतामगमन्।

तथापि–

"हतोऽपि लभते स्वर्गं जित्वा तु लभते यशः ।
उभे बहुमते लोके नास्ति निष्फलता रणे ।।"

इति कथञ्चित् धैर्यमास्थाय निसर्गकवचकुण्डलमहिम्ना अप्रधृष्यः अङ्गराजः मद्रराजगृहीतप्रग्रहं रथमर्जुनाभिमुखं वाहयामास ।

तस्मिन्नवसरे, ब्राह्मणरूपेण प्रविश्य शक्रः तस्मान्महत्तरां भिक्षां ययाचे । "भगवन्, किं काञ्चनाञ्चितश्रृङ्गं गोसहस्रं ते ददामि । अथवा काम्भोजप्रभवमनिलसमवेगमश्वीयं ते विसृजामि । उत गिरिनिचयोन्नतिमन्मत्तवारणयूथं स्पर्शयामि" इति सप्रणामं तमुदारमतिरुदाजहार कर्णः । एतेषु निरपेक्षं विप्रवरं दृष्ट्वा स वदान्यमूर्धन्यः, "किमपर्याप्तः कनकनिचयोऽभिमतः । किमखिलां पृथ्वीं जित्वा ते ददामि । किमग्निष्टोमफलजिघृक्षा । नेच्छसि चेत्सर्वमेतत् किं मच्छिर एव ते प्रार्थनीयं भवति । अथान्यदपि श्रूयताम् –

अङ्गैः सहैव जनितं मम देहरक्षा
देवासुरैरपि न भेद्यमिदं सहास्त्रैः ।
देयं तथापि कवचं सह कुण्डलाभ्यां
प्रीत्या मया भगवतो रुचितं यदि स्यात् ।।"

इति सानुनयमभ्यभाषत । सद्यो, "ददातु ददातु" इति कपटभूसुरः सोऽयाचत । तदात्वे तस्मिन् जातशङ्कोऽपि कर्णः दानशौण्डीरतया "धिगयुक्तमनुशोचितुम् । न प्रतिज्ञामपलपामि । अपि च पात्रेषु

यद्दत्तं तन्न शुष्यति, नापक्षीयते, न विपर्यस्यति कालेनापि। तत्तुष्यत्वेष ब्राह्मणः" इति सव्यवसायः कवचकुण्डले आत्मनो देहान्निकृत्य तस्मै प्रादात्। गृहीत्वा चार्जुनपक्षपाती निश्चक्राम मघवा।

४ कर्णस्त्वनुपदमेव विदितयाथार्थ्योऽपि,—

"अनेकयज्ञाहुतितर्पितो द्विजैः
किरीटिमान् दानवसङ्घमर्दनः।
सुरद्विपास्फालनकर्कशाङ्गुलि-
र्मया कृतार्थः खलु पाकशासनः॥"

इति परां परितोषतुलामारुरोह। न पुनर्वञ्चितोऽहमिति शुशोच।

५ अथ पश्चात्तापस्पृष्टहृदयेन पुरन्दरेण पाण्डवेष्वेकपुरुषवधार्थममोघमस्त्रं विमला नाम शक्तिर्देवदूतद्वारा कर्णाय प्रदिष्टा। तां प्रतिगृह्य, "अफल्गुवीर्यः स फाल्गुनो यत्र, तत्र प्रचोद्यतां रथः" इति शल्यं सन्त्वरयन् युद्धप्रस्थानमकरोदङ्गराजः।



## ऊरुभङ्गः

अथ रणाहतगजाश्वनरेन्द्रयोधसङ्घसमाकीर्णे, पिशितासृक्-पूरपर्याप्तपारणाल्लुब्धविहङ्गमभ्रमणोड्डामरावकाशे, शङ्कुप्रासासितोमर-भिण्डिपालमुसलमुद्गरगदादिभिरायुधशतैराचिततले, नृत्यत्कबन्धे, विरुवच्छिवाशिवध्वनौ, त्रस्ताधोरणतया विद्रवन्मत्तहस्तिनि सूतप्रणाशप्रचलितहयापवाहितस्यन्दनशताकुले, रुधिरासारकलिलप्रदेशे, प्रतिभयतामावहति समन्तपञ्चके, विपन्नागण्यराजन्यमण्डले क्षीणप्राये च उभयपक्षे, द्वैपायन-हलायुध-कृष्ण-विदुरप्रमुखानां कुरुकुलदैवतानां प्रत्यक्षमन्योन्यवीर्यस्पर्धिनोरतिचिरसञ्चितामर्षदुस्सहाग्रहयोः सुयोधन-वृकोदरयोः प्रावर्तत महान् गदाविग्रहः। सुशिक्षितमल्ललीलाविशेष-विचित्रिते बहुप्रकारप्रवृत्ते च तस्मिन्, अन्तरा निर्भिन्नाग्रललाटवान्त-रुधिररूषितः भग्नांसकूटः सुयोधनगदाप्रहारशिथिलीकृताङ्गो निपपात भीमसेनः। तादृशं तमुपहसन्नाह धार्तराष्ट्रः, "न खलु, भीम, दीनं निहन्ति वीरः समरेषु। तन्मा भैषीः" इति। एवमुपहस्यमानं भीमं दृष्ट्वा कृष्णः स्वमूरुमभिहत्य तस्मै कामपि संज्ञां प्रायच्छत्। तया संज्ञया समाश्वासितः प्रत्यागतप्राणसारो मारुतिर्गदां प्रगृह्य सहसोत्थितः गर्जन् धर्ममनादृत्य अनवेक्ष्य च समयं सुयोधनोर्वोः भयदां

गदां मुमोच । तेन च जर्जरोरुः प्रस्रवद्रुधिरोपसिक्तभूतलः पपात कुरुराजः ।

५ तदा दुर्योधनापेक्षया प्रतिपन्नक्रोधं हलायुधं दृष्ट्वा सम्भ्रान्तैः पाण्डवैः श्रमशिथिलाङ्गः भीमः सद्यः कृष्णकरावलम्बलम्भितगतिरपावाह्यत । तस्मिन्नपक्रान्ते, प्रबलामर्षसंरक्तलोचनः हलधरः राजानमभिवर्तमानः समुत्क्षिपन् हलमुदगर्जत् – "अवधूय रणाभिसन्धिम् अनालोच्य च पुरः स्थितं मां, कथं भवान् भीमेन वञ्चितः । एष रिपुबलप्राणहरेण कालिन्दीजलवर्त्मदेशिकेन लाङ्गलमुखेन केदारानिव विदारयामि पाण्डुपुत्रान् । प्रतिपालयतु भवान् क्षणमात्रम्" इति । अन्वतप्यत च भृशं रुधिरानुलिप्तच्छविं भूसंसर्पणधूलिधूसरितम् अर्धोपरतैरङ्गैः भूमौ विवेष्टमानं पश्यन् तपस्विनं दुर्योधनम् । तमाह प्रसादं याचमानः सुयोधनः सानुनयं, "भगवन्, विमुञ्च रोषम् । जीवन्तु ते कुरुकुलस्य निवापमेघाः पाण्डवाः । अलं विग्रहकथया । प्रशाम्यतु वैरम् ।

प्रतिज्ञावसिते भीमे गते भ्रातृशते दिवम् ।
मयि चैवं गते राम विग्रहः किं करिष्यति ॥

अपि च यदहं जतुगृहादात्मनिर्वाहिणा हिडिम्बराक्षसमर्दनेन वैश्रवणालयप्रक्षोभिणा महाप्रभावेण भीमेन छलमाश्रित्यैव जितः तदहमद्याप्यजित एव । इदमपि पश्यतु भवान् । सर्वमेतल्लीलागोपकिशोरकस्य भगवतो नारायणस्य संविधानकमेव । किमत्रानुशोच्यते" इति ।

३ अत्रान्तरे, पुत्रशतवियोगशोकाभिभूतहृदयो धृतराष्ट्रः पुत्रदत्तमात्मनो निवापमसहमानं कृतान्तहतकं विगर्हमाणः, "हा पुत्रक! क्वासि। देहि मे प्रतिवचनम्" इति अतिकरुणं रुदन् दुर्जयेनादिश्यमानमार्गो दुर्योधनाभिमुखमभ्यवर्तत। तमन्वास्ते स्म पतिधर्मचिह्नं नयनपट्टबन्धमजस्रैरस्रैरार्द्रयन्ती गान्धारी, प्रत्यासन्नवैधव्यदुःखतया अतिमात्रविक्लबहृदये देव्यौ च। अथानीशतया गात्राणाम् अपहृतपित्रभिवन्दनस्वातन्त्र्यस्य, प्रकाशीकृतमूर्धजं रणाजिरप्रविष्टमवरोधजनं च पश्यतः राज्ञो हृदये न ममौ मन्युपरीवाहः। तदा बालभावादज्ञातसमयविशेषदौरवस्थ्यं परिचितविधिना स्वमङ्कमारोहन्तं दुर्जयम् असह्यवेदनतया सहसा निवारयन् अतिमात्रं विषादेनान्तरदह्यत स पुत्रवत्सलः। निरतिशयसन्तापकारिणीमेतादृशीं दुर्गतिमापन्नं तनयमुपसृत्य धृतराष्ट्रः शतमुखप्रवृत्तदुःखप्रवाहः शोकाम्बुलुलितलोचनतया पुनरुक्तान्ध्यः भूमौ पतित्वा करुणतरं विललाप। तमाश्वासयन्नाह कुरुराजः, "त्वत्पादमात्रप्रणतमौलिरपरिक्षतेन मानेनैवापराङ्मुखो हतस्तव सुत इति शोको निगृह्यताम्। क्रियतां मय्यनुग्रहः" इति। अथ मातरमाभाष्य, "यदि पुण्यं मया कृतं त्वमेव अन्यस्मिन्नपि जन्मनि मम जननी भवितुमर्हसि" इत्यवदत्।

४ क्रमेण च शोकार्तमवरोधजनं यथोचितं पर्यवस्थाप्य सस्नेहमाहूय पुत्रम्, "अहमिव पाण्डवाः शुश्रूषितव्याः। कुन्त्या

निदेशे वर्तस्व। द्रौपदी सुभद्रा चोभे मातृवत्पूजयितव्ये। मन्त्रामावसाने युधिष्ठिरं स्पृशता त्वया तेन सह मम निवापो देयः” इत्यादिक्षत्।

५ तदात्वे, मूर्तिमानिव वीरो रसः ससम्भ्रमं कार्मुकहस्तः प्रविश्य द्रौणिः, अखण्डितपराक्रमैः भीष्मद्रोणादिभिराश्रितनिजपक्षमपि निजवाक्योन्मुखैकादशवाहिनीपरिरक्षितमपि छलजितम् आसन्नमृत्युम् अभिहतगजतुरगनररथप्राकारमध्यपतितं कुरुराजमभिवीक्ष्य, क्रोधव्यलीकाभ्यां पर्यायोपतप्तहृदयः, स्तोकावशेषे कुरुकुले प्रशाम्यन्तमपि युद्धदावानलं वैरनिर्यातनार्थं पुनरुज्ज्वलयिष्यन् धीरमेवमुदगर्जत्— “भोः कुरुराज! अद्य समुद्यतास्त्रः निशासमरमुत्पाद्य रणे तान् धक्ष्यामि पाण्डवान्। आपततु वा स्वयमेव कृष्णः आविष्कुर्वन् चतुर्भुजशङ्खचक्रादिलक्षणं गरुडे निविष्टं निजं रूपम्” इति।

६ अथ, “मा मा भवानेवम्—

गतं धात्र्युत्सङ्गे सकलमभिषिक्तं नृपकुलं
गतः कर्णः स्वर्गं निपतिततनुः शन्तनुसुतः।
शतं भ्रातॄणां मे हतमभिमुखं संयुगमुखे
वयं चैवंभूता गुरुसुत धनुर्मुञ्चतु भवान्॥”

इति सुयोधनेन निवारितसम्भ्रमोऽपि, “सर्वथा कृतप्रतिज्ञोऽस्मि। अद्यैव ब्राह्मणस्य मम वचनात् पितृभुक्ते राज्ये दुर्जयो विनाऽभिषेकं राजा भवतु” इत्यहार्यनिश्चयो बभाषे।

*

७ समनन्तरक्षण एव सुयोधनः पुरतः समुत्थितान् कुलपूर्वपुरुषान्, सकर्णं भ्रातृशतं, क्रुद्धमभिमन्युं, महार्णवान्, अप्सरसश्च विभावयन्, कालेन प्रेषितं सहस्रहंसप्रयुक्तं वीरवाहिनं विमानमधिष्ठाय स्वर्गमारुरोह ।

८ ततो निर्विण्णो धृतराष्ट्रः पुत्रप्रणाशविफलं राज्यं परित्यज्य सज्जनाश्रयणीयानि तपोवनानि रोचयामास । अश्वत्थामा च सौप्तिकवधोद्यतपाणिः सशपथं निरगात् ।

---

इति श्रीमन्महालिङ्गकविविरचिते भासकथासारे प्रथमो भागः ।



# List of Books

—— :0: ——

| | |
|---|---|
| लघुरामचरितम् । ... ... | 0—8—0 |
| **Readers:** उपक्रम पाठावलिः, प्रवेश पाठावलिः, मध्यम पाठावलिः, प्रौढ पाठावलिः (whole set) | 2–12—0 |
| **Prose work:** | |
| भासकथासारः । Part I | 0–12–0 |
| ,, II | 0–8–0 |
| ,, III | 1–8—0 |
| Translation and Notes to Part I | 0–12—0 |
| Do Part III | 0—8—0 |
| **Poetry:** | |
| किङ्किणीमाला । (Fifty short poems) | 2–0–0 |
| व्याजोक्तिरत्नावली । (with English Translation and Introduction) | 2–0–0 |
| भ्रमरसन्देशः । (Sandesakavya) | 1—8–0 |
| वनलता । (A lyric Poem in five cantos) | 1—0—0 |
| द्रविडार्यासुभाषितसप्ततिः । (Auvvai's Poems in Sanskrit) | 1—0—0 |
| शम्भुचर्योपदेशः । ('A Day with Sambhu' in Sanskrit) | 0—8—0 |
| देशिकेन्द्रस्तवाञ्जलिः । | 0—8—0 |
| **Drama:** | |
| कौण्डिन्यप्रहसनम् । | 0—8—0 |
| कलिप्रादुर्भावम् । in 7 Acts. (in the press.) | |

*Copies can be had from:*

*THE AUTHOR*

# BHASA KATHA SARA

# भासकथासारः ॥

CONSISTING OF ABRIDGED NARRATIONS
IN SANSKRIT PROSE
OF THE STORIES OF THE TRIVANDRUM PLAYS
— ATTRIBUTED TO —
BHASA

BY
Y. MAHALINGA SASTRI, M.A., B.L.,
*Lecturer in Sanskrit, Madura College, Madura.*
SON OF MAHAMAHOPADHYAYA
BRAHMASRI YAJNASWAMI SASTRIGAL
*of Kumbakonam.*

**Part II**

भागत्रयात्मके द्वितीयो भागः ।

SECOND REPRINT OF THE SPECIAL EDITION.

PUBLISHED BY THE AUTHOR

 1936

|| भासकथासारः ||

# BHASA KATHA SARA

VOL. I (PARTS I & II)

Revised Second Edition

with Summaries, Preface and Notes

(*to be shortly published*)

---

VOL. II (PART III)

Madras University Intermediate Prose Text

Third Edition 1936,

with Summaries of the Stories, Preface and Grammatical Notes

Price Re. 1—0—

Translation and Notes for the same

Price ... 0—12—0

|| कुमारसम्भवम् ||

# KUMARA SAMBHAVA

CANTOS V, VI & VII

with Introduction, Translation a Notes

Price Re. 1—4—0

# BHASA KATHA SARA

# भासकथासारः ॥



CONSISTING OF ABRIDGED NARRATIONS

**IN SANSKRIT PROSE**

OF THE STORIES OF THE TRIVANDRUM PLAYS

— ATTRIBUTED TO —

BHASA

BY

Y. MAHALINGA SASTRI, M.A., B.L.

*Lecturer in Sanskrit, Madura College, Madura.*

SON OF MAHAMAHOPADHYAYA

BRAHMASRI YAJNASWAMI SASTRIGAL

*of Kumbakonam.*



**Part II**

भागत्रयात्मके द्वितीयो भागः ।

SECOND REPRINT OF THE SPECIAL EDITION.

PUBLISHED BY THE AUTHOR

 1936

## PART II.

## CONTENTS.

---



---

*N. B.*—For page-numbering, Part II is considered as contiguous to Part I as both Parts were and will in the further editions be comprised in one volume as originally published.

Madura, 19—7—36

Y. Mahalinga Sastri.

# PART II.

## CONTENTS.



*N. B.*—For page-numbering, Part II is considered as contiguous to Part I as both Parts were and will in the further editions be comprised in one volume as originally published.

Madura,
19—7—36

Y. Mahalinga Sastri.

# BHASA KATHA SARA

## PART II.

## SUMMARY OF THE STORY.

---

(1)

DASARATHA, of the illustrious Solar race of kings, ruled over Ayodhya for a long number of years. At the declining period of his life, he, desiring to lead a recluse's life as was the wont with his noble ancestors when grown old, made preparations for the coronation of his eldest son Ramachandra. But the actual investiture was interrupted at the critical moment by Manthara who flashed a shocking message to the king by the authority of Kaikeyi the junior queen. The kingdom was settled on the issue of Kaikeyi through the bargaining of her parents at the time of her marriage and Dasaratha was sadly helpless when the stipulation was demanded to be given effect to. The pathos of the situation was further intensified by the tenacious insistence by Kaikeyi on the banishment of Rama for fourteen years from the kingdom. Lakshmana was ablaze with wrath at such a turn of the events and was particularly incited to a spirit of desperate vengeance by the latter clause of indefensible cruelty. Dasaratha himself was protesting and struggling desperately against the injustice sought to be done to Rama. But, Rama, noble as he was, declared himself determined to carry out to the letter the command of his junior step-mother. To Sita a long separation from Rama during his exile was unthinkable, and Lakshmana's secession followed as a matter of course. The three set out for the forest amidst the pathetic groans and helpless protests of the citizens, friends, servants and the nearest kinsmen.

The terrible blow of Rama's departure, entirely shattered the faculties and the physique of the old Dasaratha already in the wane, and the farthest limit to which he managed to drag on his intolerable existence was the moment of Sumantra's return after his escorting the exiles up to the territorial boundary.

When Dasaratha passed away, Vasishta taking counsel with the ministers, sent for Bharata who from his early age had been living in the household of his uncle. The messenger was charged with saying nothing about the death of Dasaratha and Bharata was given to understand that his father was sick.

Upon reaching the outskirts of Ayodhya, Bharata was required to wait for a short while in order that the hour of an auspicious constellation might arrive. Bharata cast about to spend the interval leisurely and, descrying a temple not far off, walked into it. In the interior he found four consecrated images which were apparently fashioned on human models. When he prepared to offer his salutation and prayer to them the temple-guard suddenly intervened and said "These are Kshatriyas and as such are not to be saluted by a person like you". Upon further enquiry the guard pointed to the first three images as being those of Dilipa, Raghu and Aja, respectively, the ancestors of Bharata. When he proceeded to identify the fourth which bore a close resemblance to Dasaratha himself, Bharata required to know if statues were installed, in that house, of living monarchs also. The speedy reply of the guard to this was, "No. Statues are made only for the dead." Bharata's head reeled on his hearing this, for, he vaguely perceived that a calamitous announcement was lying in wait for him; and being unwilling to be shocked so precipitously, forbade the guard to speak further on. But the guard defiantly and relentlessly continued: "Why, sir, would you not know about this image of

Dasaratha, the king who gave up his kingdom and his life for the sake of keeping his marriage-pledge?" Bharata could not bear the crushing cruelty of this news. It was all his mother's doing and he was involved in the guilt however involuntarily and unwittingly. Another step in the conversation revealed that Rama, with Sita and Lakshmana had gone into exile to the forest. Bharata swooned and recovered, cried in despair, depreciated his luck, despised himself for being the motive of his mother's cruel avarice, and once again swooned. The temple-guard could no more be mistaken in the identity of the person whom he had so unwarily reduced to such a sad plight.

At this juncture, entered by previous appointment the bereaved ladies of the harem escorted by Sumantra in order to inspect the statue of Dasaratha newly installed in the statue house of ancestors The guard directed their attention to the plight of Bharata and retired. When Bharata was brought back to consciousness by the efforts of the ladies, a scene of pathetic confusion followed. Bharata paid his respects to Kausalya and Sumitra, but did not deign to look on the face of Kaikeyi. He rebuked her bitterly making her answerable for a number of cruelties and crimes. He rejected with contempt the offer of the crown made by Vasishta and without entering the city, directly set out to the forest to meet Rama.

Rama's hermitage was on the *Chitrakuta* mountain. Bharata supplicated himself before Rama, seeking pardon for all the sins of his mother and begged of him to accept the crown. But Rama was stern in his adherence to duty and enjoined Bharata to carry out in his turn the wishes of the departed father by taking up the sovereignty. Bharata however, being unable to acquiesce in the exhortation with a free conscience, struck a compromise by which he was to install on the throne the pair of slip-

pers worn by Rama and govern the kingdom as its servant for 14 years at the end of which period Rama was to assume sovereignty in the regular manner. Upon Rama willingly parting with the slippers in order to please his devoted brother, Bharata turned back with a conscience much laid at ease.

(2)

Sometime later, when Bharata was provoked by the tidings of Rama's adversities in the forest, to insult Kaikeyi ruthlessly for her ill-fated fatuation, she, seconded by Sumantra, appealed to him to consider the following facts in extenuation of her guilt. The banishment of Rama with its sequel of Dasaratha giving up his life out of grief, was pre-ordained by virtue of a curse of an old recluse whose only son Dasaratha had killed by mistake while hunting. In the matter of fixing the term of exile Kaikeyi had been made a mere tool by Providence, for she intended to say "14 days" but actually said "14 years". Sumantra further explained that the preceptors of the royal family, Vasishta and Vamadeva included, acquiesced in all these dispensations of Providence and were not inclined to blame anybody. After this interview Bharata cooled down considerably towards his mother and sought reconciliation with her.

Soon after sending back Bharata, Rama left the Chitrakuta and proceeding southwards entered the *Dandakaranya* celebrating the entry with the slaying of Viradha. He then visited a number of sages in their respective hermitages and ultimately fixed his residence at *Janasthana* a region which was subject to the sway of a Rakshasa named Khara.

Living there, Rama once incurred the enmity of the Rakshasas led by Khara through the wrong he did to

Surpanakha. In the battle which followed, fourteen thousand Rakshasas with the leaders Khara, Dushana and Trisiras were swiftly destroyed by Rama unaided except for his bow and arrows.

That Rama had become a great menace to the Rakshasas soon reached the ears of Ravana and the latter happening also to be swayed by a wicked motive regarding Sita of whose beauty he had heard much, resolved upon the abduction of Sita by a ruse, both as a measure of vengeance against the enemy and as a means of carrying out his own design on her. He chose his moment cleverly. Lakshmana had gone far away to welcome a sage returning from a pilgrimage. Rama was discussing with Sita about the means of celebrating in a marked way his father's annual ceremony which was coming off the very next day. Ravana entered in the guise of a Sanyasin and on being received with the customary civilities by Rama and Sita, mentioned in a casual manner his acquaintance with the *Sraddha Kalpa*. Rama eagerly enquired of him "Holy Sir, acquaint me with the most meritorious means of gratifying the departed while oblations are being offered to them. Ravana replied, "there is a race of wonderful deer on the seventh summit of the Himalayas which are all gold and emeralds all over the body, which vie with the wind in fleetness, and which drink of the Ganges water directly falling from the matted crown of Siva." And when Rama succumbed to the temptation, Ravana produced an illusion of such a deer and by this agency managed to entice Rama away from the spot.

When Rama had gone out of sight, Ravana suddenly assumed his form and carried away Sita by force in his car which coursed through the air. The heroic endeavours of Jatayu, the eagle-friend of Dasaratha to rescue Sita, merely cost him his life and availed naught else.

Rama returned after a fruitless pursuit of the deer to see the hermitage empty. Lakshmana soon joined him. Upon realising the loss he had sustaind Rama became overwhelmed with grief. He roamed about listlessly from forest to forest lamenting all the way and scarcely taking comfort from the devoted solicitude of Lakshmana.

When Rama reached Kishkindha in the course of his rambles southward. there arose an alliance between him and Sugriva the king of monkeys who was living in the Risyamuka mountain in hourly dread of Vali, his elder brother, having been dispossessed by the latter of both his kingdom and his wife. Rama slew Vali and raised Sugriva to the throne of Kishkindha. Sugriva in his turn despatched armies of monkeys to seek out Sita in all directions. Angada son of Vali and Hanuman the chief minister of Sugriva, were at the head of the party going southwards. When they reached the sea-shore they accidentally met Sampati the elder brother of Jatayu and learnt through him that Sita was lodged in Lanka on the other side of the ocean.

(3)

Hanuman the ablest of the monkeys and son of the wind-god lept over the ocean and after making a careful search in Lanka, espied Sita at the foot of a tree in the harem-garden, wretched-looking and surrounded by Rakshasis. He also witnessed a scene which passed between Sita and Ravana in which the most abject addresses of the latter were scornfully resented by the former. Hanuman, soon after, took the opportunity to announce himself to Sita. He placed in her hands the signet ring of Rama as a token for inducing confidence and giving comfort. After delivering Rama's message of love and heroic reresolve to her, Hanuman courted a row with the Rak-

shasas in which he made havoc of vast numbers of his opponents. In the end he allowed himself to be taken captive by Indrajit in order to have an opportunity of meeting the Lord of Lanka and affronting him in person. This he did to his heart's content and for his effrontery he was punished with lighting up of his tail. In the course of his bandying words with the enemy, Hanuman was able to observe how Vibhishana, the brother of Ravana intervened in his favour, strongly protesting against the injustice of retaining Sita by force.

Soon after Hanuman had brought the news about Sita's whereabouts and the enemy's unrelenting attitude, the armies of Sugriva accompanying Rama and Lakshmana made rapid march towards the seashore and encamped there, wondering how ever they were to cross the ocean. Just at that time, Vibhishana joined the host as a suppliant at the feet of Rama, having been expelled by his brother on suspicion of disaffection and treachery. Rama forded the ocean by the grace of the Ocean God and pitched his camp on the slopes of the *Suvela* mountain in Lanka.

Then there ensued several skirmishes between the *Vanara* and *Rakshasa* hosts. Each encounter laid a heavy toll of the Rakshasas and one by one the stalwarts fell on the field. Kumbhakarna himself had been slain in battle. The genius of victory seemed to have deserted Ravana. Indrajit had sallied forth to battle to mend matters if he could. At this juncture when a sober person would have concentrated on war-policy, the ill-fated Ravana pursued the mirage of Sita with absurd infatuation. He sought to subjugate her to his will by producing before her two puppet heads resembling those of Rama and Lakshmana alleged to have been killed in battle by Indrajit. But by an irony of fate, just at that moment entered a servant breaking the calamitous news

that Indrajit had been killed by Lakshmana. Ravana on hearing this became overpowered by a tumultuous commingling of disappointment, despair, sorrow and wrath, and burst forth into the battle-field vowing that the rise of another day would see on the face of the earth either Rama or Ravana, but not both.

Then ensued the famous battle between the two heroes who had so long been mutually yearning for an eventual personal combat. After a prolonged display of skill on either side, the ten heads of Ravana were felled by Rama who used the invincible missile of *Brahmastra* The devas delighted with the removal of the terror of the universe, poured down celestial flowers on the head of victorious Ramachandra.

Rama next installed Vibhishana on the throne of Lanka. Vibhishana, eager to restore Sita to Ramachandra made his respectful submission to that effect. But Rama assumed an apparently rigourous attitude in the matter, seeming to be afflicted with doubts regarding the immaculate purity of Sita who had been living for so long in the house of the wicked Rakshasa, however involuntarily. Thus insulted, Sita was sorely aggrieved and threw herself into the flames. But the God of Fire would not injure her. She was the better for having gone into the fire even as a gold neck-lace. *Agni* himself bore her towards Rama and presenting her to him said "Take back Janaki who is of spotless purity, sinless and stainless. She is Lakshmi incarnate even as you are Purushottama incarnate."

Rama accepted Sita and with all his followers returned to Ayodhya making an aerial journey on the *Pushpaka Vimana*, He there took back the Kingdom from Bharata and with his coronation performed, reigned for long as king.

॥ श्रीरस्तु ॥

# भासकथासारः ॥

## द्वितीयो भागः ।

## ॥ श्रीरामचरितम् ॥

यः सत्ये गुरुमासयन्नुपनतां तत्याज राज्यश्रियं
यः सन्तोषयितुं प्रजाः परिजहारापन्नसत्वां प्रियाम् ।
तस्योपाश्रितकौशराक्षसपरित्राणप्रतिष्ठागुरो-
र्धर्मे सूक्ष्मगतौ जयत्यवनिजाजानेरभेद्या स्थितिः ॥

(१)

आसीदशेषकल्याणनिलयेषु कोसलेषु अयोध्या नाम यथार्थाभिधाना राजधानी । तत्र च प्रमुदितप्रजावत्सलानां, प्रचण्डविक्रमाणां चण्डभानुवंशमहत्तराणां ललामभूतः, पुलोमजारमणप्रतिविसृष्टार्धासनसभाजनोचितः, सुरासुरसङ्ग्रामेष्वप्यप्रतिहतमहारथो दशरथो नाम राजा लीलानुशासितमहीवलयः सुचिरं व्यलासीत् । स च बहुवर्षसहस्राणि राज्यभारं निर्वाह्य परिखिन्नः सञ्जातजरावैक्लव्यो विषयव्यावृत्तकौतुकश्चरमव्रतमिक्ष्वाकूणां

वैखानसीं वृत्तिमाशिश्रयिषुः कुलामात्यप्रकृतिमण्डलानां सुचिरसंभृतकौतूहलमनुरुन्धानो वयःस्थं जनलोचनचन्द्रं रामचन्द्रं राज्यश्रिया सङ्गमयितुं तत्वरे ॥

अथाभिषेककृताभिमुख्यैर्वसिष्ठमुख्यैरुद्दिष्टे पुण्येऽहनि संप्राप्ते, प्रहृष्टनरनारीजना, संयोजितविशेषालङ्करणविधिपरिशोभमाना, समन्ततः प्रचलितोत्सवमङ्गला साकेतनगरी, प्रतिक्षणं नूतनेव कामपि श्रियमुररीचकार । समाह्रियन्त च राजकुले तद्विधावसरोचितसम्भ्रमेणाभिषेकसंभाराः । तथा हि—समुदश्रायि सव्यजनं छत्रम् । अकल्प्यत सनन्दिपटहं भद्रासनम् । न्यस्यन्त च तीर्थाम्बुपूर्णाः सुवर्णघटाः । अयुज्यत पुष्यरथः । सन्न्यधीयन्त सामात्यपुरोहिताः पावनदर्शनाः सहस्रमवनीसुराः । एकप्रकारसंक्षिप्ताः सभायां पौरजानपदाश्च सममेल्यन्त । स च भगवान्वसिष्ठः कालोचितक्रियाकलापप्रत्यवेक्षणव्यग्रः पवित्रावकाशां वेदीमध्यतिष्ठत् । धुर्ये स्वतनये क्रमेण भुवनरक्षाधुरामवतारयिष्यति दशरथे तत्सौराज्येन चिरानुभूतस्वास्थ्योऽपि गुणपक्षपाती जनोऽकृतपूर्वं तोषमधत्त ॥

अथ परिणामोन्मुखमनोरथो दशरथः सभायां स्निग्धतरमाभाष्य तनयमङ्कमारोप्य, साश्रुगद्गदं, "पुत्र, राम, प्रतिगृह्यतां राज्यम्" इत्युदाजहार । विनयाद्बहुमानाच्च तदप्रतिपद्यमानेन चरणपतितेन रघुनन्दनेन निर्बन्धतः स्वमतमङ्गीकारयामास च । अथारब्धे पटहे, भद्रासनलङ्घिनि रामभद्रे शत्रुघ्नलक्ष्मणगृहीतो-

न्नमितेऽभिषेकघटे, छत्रे च स्वयं नृपतिना गृहीते, अन्तरा प्रविश्य मन्थराभिधाना सरभसमवनीपतेः कर्णे किमपि जजाप । यया किल सद्योविघ्नितामिषेकमङ्गलया प्रफुल्लपौरजानपदमुखराजीवे सदस्यकालोपनतनीहारवृष्टिलीला व्यधायि । दशरथोऽपि वज्र-निर्घातेनेव प्रक्षुब्धमतिः सञ्जातशोकज्वरज्वालपरीतकरणः सवै-क्लव्यमाहूय तनूभवं कृच्छ्रेण विश्रमितुं विससर्ज । स तु प्रतिबद्धे-ऽपि राज्यलक्ष्मीप्रतिग्रहमहोत्सवे, अलोलुपतया, अतिगम्भीरतया यथाभूतवदनोल्लासोऽभिवन्द्य पितरं, "दिष्ट्या स एवास्मि रामः" इति मोदमानो मैथिलीमिमं वृत्तान्तमधिगमयितुं धृतकौतूहल-स्तदावसथमाससाद ॥

तत्र चाभिषेकवार्ताहारिणे चेटीजनाय परितुष्य प्रत्त-सर्वाभरणशून्यीकृताङ्गलतां, नेपथ्यपालनीमुपहसितुं अवदातिकया चेट्या चोरितोपहृतं वल्कलयुगळं कौतुकेन परिधाय, "किं मे शोभते" इति सखीजनमनुयुञ्जानां, तदात्वेऽप्यक्षीणलावण्य-सम्पन्मनोहरां हृदयदयितां दयितामालुलोके । कृतसम्भाषश्च तया क्षणं यावत्तिष्ठति तावत् "हा हा महाराज" इति नरनारीजनस्य निर्मर्यादो महानार्तध्वनिः श्रोत्रपथमवातरत् ॥

ततः सत्वरापतितः कञ्चुकी राज्यलोभाद्भरताभिषेकं याचमानायाः कैकेय्याः कार्कश्यमभिचुक्रोध । निजपक्षपातेन गुरु-जनमपवदन्तं तमवस्थापयन् प्रत्याह राघवः— "आर्य, किमत्रा-क्रोशस्थानम्? गुणानेव पश्यामि मदभिषेकनिवृत्तौ ॥

वनगमननिवृत्तिः पार्थिवस्यैव ताव-
न्मम पितृपरवत्ता बालभावः स एव ।
नवनृपतिविमर्शे नास्ति शङ्का प्रजाना-
मथ च न परिभोगैर्वञ्चिता भ्रातरो मे ॥

अपि च—

शुल्के विपणितं राज्यं पुत्रार्थे यदि याच्यते ।
तस्या लोभोऽत्र नास्माकं भ्रातृराज्यापहारिणाम् ॥"

इति । समादिशच्च कञ्चुकिनं मातृपरिवादं विना महाराजवृत्तान्तं अभिधातुम् । श्रुत्वा च तन्मुखादतिसृष्टकैकेयीप्रार्थनं सद्यो मोहमुपागतं राजानं नितरामखिद्यत ॥

तदनु धनुष्पाणिराविर्भूय क्रोधमूर्च्छितो लक्ष्मणः प्रक्षुब्ध इव प्रलयवारिधिरित्थमुदगर्जत् । "अहो बत क्षत्रियाणामपि क्षीणसत्त्वता । धिक्, एते वयं विश्रुतवीरापदानाः प्रक्रान्तचापलयाप्यबलया केवलमेवं परिभूयामहे । तन्नालमस्याः पापाशयायाश्चिरकाङ्क्षितसङ्गमेप्यार्येऽभिनिविशमानां यदियमपचकर्ष निर्भरासूययेव राज्यश्रियम् । पश्यत लोभानुस्खलितायाा नृशंसताया विलसितम् । मणिमकुटधारणप्रसाधिते शिरसि तन्मुहूर्त एव जटामाबद्ध्य चतुर्दश वर्षाणि नाम वनमवनोचितेन भवनीकर्तव्यम् । जराजर्जरमतिनाप्यवनीपतिना नियतिरिव दुर्व्यवस्थेयं केनाप्यसम्बद्धेन धर्मव्यवहारेणानतिक्रमणीयेति कृत्वा दुःखदावानले निपात्यते ह्यात्मा । वयं तु प्रचलिताः सद्यो युवतिरहित-

मेव भुवनतलमखिलमापादयितुम् । तिष्ठतु तावदार्यो यदि न सम्मन्यते । मुञ्चतु मां भवान् यतः कलितनिश्चयोऽस्मि" ॥

इति समारब्धसंरम्भभीषणं तमनुजन्मानं पेशलाक्षरैः सान्त्वनोपक्रमैर्मातृनियोगप्रतिबद्धस्वातन्त्र्याणां पातकपर्यवसायिनः क्रोधस्यानवसरमुपदर्शयन्समाधाय रामचन्द्रस्तस्य हृदयोत्तापं शनैरशमयत् । उररीचकार च प्रशान्तगम्भीरे मनसि कनिष्ठमातुः प्रत्यक्षोदीरितनिर्विशेषमविलङ्घ्यरूपमनुशासनमुरुतोषेण ॥

अथ तदात्वोपनतान् सीताकौतुकवर्धनश्रद्धया नेपथ्यपालन्या स्वयं प्रेषितानन्यानननुभूतान् वल्कलानात्मने रामः प्रतिगृह्य दुर्निवारानुगमनव्यवसायेन सौमित्रिणा सह विसृज्य सत्वरं पर्यधात् । धृतारण्यकवेषश्चानपेक्षितगुरुजनामन्त्रणविधिः मुहूर्तमवतिष्ठस्व वत्सेत्यतिकरुणमुल्लपन्तमापतन्तमपि तातं श्रुत्वा कान्तारगमनप्रत्यूहपरिजिहीर्षया दृढनिश्चयाकलनकठोरहृदयः क्षणमात्रमपि विलम्बमसहमानः, प्रार्थितयापि प्रथमप्रतिपन्नचीरपरिधानमपरित्यजन्त्या प्रकाशितानुप्रवसनसिद्धान्तया कान्तया परिष्कृतपार्श्वः, सौभ्रात्रशेवधिना लक्ष्मणेन पुरो निर्दिश्यमानमार्गो दीनाक्रन्दनशरणपौरलोचनाम्बुप्रवाहोपसिक्तनीरजःकृतप्रतोलीकां तदुपक्रमसमुत्सादितोत्सवाशंसां रघूत्तंसः पुरीमयोध्यामतिलङ्घ्य समचलद्विपिनाभिमुखम् ॥

निर्गते च सदारानुजे रघुनन्दने, नरपतिः पतन्निव पतङ्गः शुष्यन्निव महोदधिः विशीर्यमाण इव धरणिधरः पारे वाचामङ्कै-

राधिपरिक्षीणैः कार्पण्यमुद्वहन्नसहापीडेन हृदयावस्कन्दिना शोक-शङ्कुनाऽतिकरुणमन्तस्संलपितः कौसल्यासुमित्राभ्यां स्वयं निगृहीतात्मशोकाभ्यामन्वास्यमानश्चरमशय्यामधिशिश्ये। स तदानीमतिभूमिं गतेन चिन्ताव्याधिना शिथिलेन्द्रियप्रतिर्व्यथमानो विवशमनेकधा व्यचेष्टत। तथा हि—शश्वदाविष्टतीव्रमन्युपिशाचिकावेगादिव शयनादुत्थायोत्थाय न्यपतत्। मुहुर्मुहुः स्मृतिवशादाघट्टितहृदयनिखातकैकेयीदुर्वचनशल्य इव दुस्सहवेदनामनुभवन् हा हेत्युच्चैर्विललाप। परित्राययितुमिवात्मानमवलाव्यालीमुखात् पुनः पुना राम रामेत्याचक्रन्द। मृत्युपरिगृहीतस्य मे चरमदर्शनं वितरत पुत्रका इति पदे पदे भृशं परिदेवयाञ्चक्रे। परिपालितपितृसङ्गरो महाप्रभावोऽनया गर्भे धृत इति वारं वारमतिमानेन बहुमानेन प्रियवचनैः कौसल्यामन्वरुध्यत। पुत्रविवासनेन कृतापकारमात्मानं क्षमापयितुमिव दीनवदनस्तामसकृन्निश्वसन्नवलुलोके। धिङ्मां स्त्रीमतिपरिगृहीतं लोकोपहास्यं मन्दधियमिति विलज्जमान इव भूयो भूयो मोहमहातमसि निलिल्ये। निसर्गाऽनुकम्पिनापि प्रियनन्दनेन निरनुक्रोशमुपेक्षितस्य मम कोऽर्थो जीवितेनेति वैराग्यादिव शोकदावानले प्राक्षिपत्स्वमात्मानम्॥

तस्य च तदा निरतिशयतनयविरहानलपरिप्लुष्टहृदयस्यानारतं प्रमुह्यतः प्रतिबोधं विना कौसल्यासुमित्रयोरपि प्रत्यभिज्ञा दुश्शकैवासीत्। अदृश्यभूते लोचनसुधाकरे रामचन्द्रे विसृत्वरतमोनिमीलितमिव नयनयुगलमन्धीबभूव। रामान्वेषणप्रस्थितेव प्रयत्नावस्थाप्यमानापि बुद्धिः स्वनियोगाद्भ्रंशे॥

एवमप्रतीकारायां दशायां वर्तमानं सकृत्कृतान्तमुपालभमानं सकृदात्मानमेव दुष्कृतकारिणं कुत्सयमानं कदाचित्कैकेयीं विगर्हमाणं भूयस्सस्नेहपरितापं पुत्रकानाहूयोन्मत्तवद्बहु प्रलपन्तं अतिकरुणदर्शनं पार्थिवं रामसकाशात्प्रतिनिवृत्तः सुमन्त्रः सविषादमुपगम्य व्यजिज्ञपत्—"देव, शृङ्गिबेरपुरं प्राप्य ते महाराजस्य प्रणाममावेद्य कमप्यर्थं विज्ञापयितुमारभमाणा बाष्पस्तम्भितकण्ठत्वात् किमप्यनुक्त्वैव वनोदरमविशन्" इति । तच्छ्रुत्वा महीपतिः कैकेय्यास्तादृशं विपाकदारुणं दुरभिनिवेशं स्मारं स्मारमतिनिबिडमुत्पीडितहृदयो,

गतो रामः प्रियं तेऽस्तु त्यक्तोऽहमपि जीवितैः ।
क्षिप्रमानीयतां पुत्रः पापं सफलमस्त्विति ॥

सावेगाक्रोशमुल्लपन् निजपुत्रकाणां पुनरवलोकननैराश्याद्द्विगुणीभूतमोहोपहतचेतनः प्रतिक्षणं परिशुशोष । अन्ततः स्वमाश्वासयितुमिवोपागतैः तत्क्षणप्रत्यक्षितैः दिलीपाजमुख्यैः पितृभिरुपच्छन्दितमात्मानं सम्भावयंस्तैः सञ्जिगमिषुः, 'अयमहमागच्छामि' इति वचसैव मूर्छया परामृष्टः स क्षणाद्दिविषदवसथमारुरोह ॥

अनन्तरमराजकोपहतमिक्ष्वाकुजनपदमवलोक्य विधिज्ञैर्वसिष्ठानुमोदितैरमात्यमुख्यैर्दशरथवचनमर्थवत्कुर्वद्भिः आबाल्यान्मातुलकुले वास्तव्याय भरताय प्रेषितः ससूतो रथः । स च, दृढमकल्यशरीरो महाराज इति केवलमाश्रावितनिजोपप्रेषणहेतुः सूतेन बलवदुत्कण्ठितस्त्वरितमयोध्यापरिसरमुपासीदन्, "एकनाडिकां यावत्प्रतिपाल्य प्रतिपन्नायामेव रोहिण्यां पुरीं प्रवेक्ष्यति

कुमार" इत्युपाध्यायेन विज्ञापितः क्षणं विश्रमितुकाम उपान्तिके वृक्षान्तराविष्कृतं देवकुलं प्रविवेश ॥

तत्र च विश्वसनीयमानुषभावानां चतसृणां प्रतिमानां स्तोमसालोक्य नमितशिरा वन्दितुमुपक्रममाणोऽसौ सहसोपेतेन देवकुलिकेन, "क्षत्रिया ह्यत्रभवन्तो, न भवादृशस्य प्रणामार्हा" इत्यवार्यत। अथ विस्तरं पृष्टः स देवकुलिको, यावत्तिस्रः प्रतिमा दिलीपरघ्वजानामिक्ष्वाकुकुलपूर्वपुरुषाणां नामतो निर्दिश्य दशरथाकृतिसंवादिनीं तुरीयामुपसीदति तावत्पर्याकुलो भरतः, "किं धरमाणानामपि प्रतिमाः स्थाप्यन्ते" इति तं पर्यपृच्छत् । सोऽवदत्— "न खलु । अतिक्रान्तानामेव" इति । अतःपरं श्रोतुमक्षमो भरतः किमप्यत्याहितमापतितमाशङ्कमानो यदा सरभसमपचक्राम तदा देवकुलिकः क्रूरमेवमभाणीत्—"तिष्ठ,

येन प्राणाश्च राज्यं च स्त्रीशुल्कार्थे विसर्जिताः ।
इमां दशरथस्य त्वं प्रतिमां किन्न पृच्छसि ॥-' इति ।

श्रुत्वैवं अशनिहत इव मुमूर्छ कैकेयीसूनुः । अथ प्रतिबुध्य, तादृशावस्थाविशेषेण स्वं कैकेयीपुत्रं प्रत्यभिजानतः तस्य मुखादेव शुल्कलुब्धया स्वजनन्या ससीतालक्ष्मणमरण्याय निर्वासितं राममवगत्य, "कथं कथमार्योऽपि वनं गतः? किमहमुपहतभागधेयः पित्रा भ्रात्रा च वर्जितामटवीभूतामयोध्यां पिपासार्तः क्षीणतोयामिव नदीमनुधावामि?" इति शोचन् स द्विगुणितमोहाभिभूतचेतनो निस्संज्ञः पपात भूपृष्ठे ॥

तत्क्षणमुपतस्थे तत्र सुमन्त्रोपदिष्टमार्गं दशरथप्रतिमादिदृक्षया कौसल्यापुरोगमन्तःपुरम्। तदा देवकुलिकेन निर्दिश्यमानावस्थं भरतं प्रत्यभिजानत्यः परिवार्य देव्यः पर्यदेवयन्त। अथ मातृकरावमर्शोपलब्धस्वास्थ्यो भरतः समाश्वस्य सुमन्त्रनिर्दिष्टनामधेये कौसल्यासुमित्रे अभिववन्दे। कैकेयीं पुनरवलोकितुमपि नैच्छत्। किञ्च "निपातिता वयं सान्वयाः सपौरजानपदाः सर्वे भर्तृद्रोहिण्या नृशंसया त्वया" इति तां भृशमधिचिक्षेप। अथ च, "जात, किं मया कृतम्? महाराजस्य सत्यवचनं रक्षन्त्या मया तथोक्तम्। तत्रापराद्ध्यति ते शुल्कलुब्धो मातामहः" इति प्रक्रान्तसान्त्वनां कैकेयीमभिक्रुद्धो भरतः—"कथं शुल्के सभार्यस्यार्यस्य वनवासोऽप्युदाहृतः। यदि ते राज्यफलतर्षः, किं नरेन्द्रो न दद्यात्। किमर्थं मन्नाम कीर्तयित्वा मामयशस्तमस्यकाण्डे पातितवत्यसि। कष्टं कृतं भवत्या। म्रियमाणः पतिर्न गणितः। दयिततनयाः क्रोशन्त्यो नानुकम्पिताः मातरः। कृत्स्नाप्ययोध्या रोदनशरणा नावेक्षिता। न गणितोऽप्यात्मा धिगिति वचसा लोके समाकृष्टः। अहो धात्रा सृष्टं भवत्या हृदयं वज्रकठिनम्। धिक् त्वां दुष्कृतकारिणीम्" इत्यवभर्त्सयमानस्तस्यै न प्रससाद। अभिषेकमधिकृत्य तु सह प्रकृतिभिः प्रत्युद्गम्य वसिष्ठवामदेवाभ्यां विज्ञापितो, "राज्यलुब्धायै इहात्रभवत्यै प्रदीयताम्" इति निष्ठुरमुक्त्वाऽप्रविशन्नेवायोध्यां रामतपोवनमभिप्रतस्थे॥

समुपगम्य च चित्रकूटाचलोपरचितां भ्रातुः पर्णशालां कैकेयीचापलात्सङ्क्रान्तकृतघ्नभावमिव स्वं मन्यमानो लज्जमानमानसो भरतो दूरादेवोपावर्तमानः समुपस्थितमात्मानं सविगर्हमुदघोषयत्। तदा स्पष्टघनेन हृदयानन्दनेन बन्धुजनबहुमानावहेन तस्य तेन स्वरसंयोगेन स्नेहपरिक्लिन्नहृदयो रामः सौमित्रिं पुरुषविशेषमवधारयितुमभ्यचोदयत्। तद्वचनेनाभिमुखापतितं लक्ष्मणं निजाग्रजं सुमन्त्रेण निवेद्यमानं कैकेयीसूनुर्यथोचितमभ्यवादयत। अथ लक्ष्मणमुखाद्विदितनिजागमनं राघवं, मैथिल्या सादरं प्रत्युद्गम्य प्रवेशितो भरतः सभक्तिविनयमुपसृत्य स्वनामनिवेदनपूर्वकं प्रणनाम। तदानीं रामभद्रः प्रेमदृढमेनमाश्लिष्य, सुमन्त्रं च दृष्ट्वा तातव्यपायाश्रितया कथया प्रकीर्णवाष्पपूरः शोकव्याकुलितेन्द्रियः सुचिरमवतस्थे ॥

अनुपदमभ्याश एव स्थातुकामं भरतं, "वत्स, पालनधर्माणो वयमिक्ष्वाकवः। तदनुचितमिहावस्थातुम्। अपि च भवद्विधं श्लाघ्यगुणं पुत्रमुत्पाद्य किं नाम नः पिता मिथ्याभिधायी भवतु। यस्य किल वाक्यमवितथीकर्तुमेवाहं वनभुवमुपागमम्। सत्यधनं हि नः कुलम्। कथं भवानन्यथा प्रवर्तते। तत्सत्वरं निवर्तस्व परिरक्षितुं स्वराज्यम्" इति निरुत्तरमन्वशात्। तदाज्ञावशंवदो भरतो व्यजिज्ञपत्— "आर्य, तेन हि मम हस्ते निक्षिप्तं तव राज्यं चतुर्दशवर्षान्ते त्वया प्रतिग्राहयितुमिच्छामि। अन्यच्च, प्रसादयतु मह्यमार्यः पादोपभुक्ते इमे पादुके। अत्रैवा-

भिषेकोदकमावर्ज्य अनयोर्विधेयः सन् भवदागमनावधि परिपालयिष्ये भुवनम्" इति ॥

ततः प्रीतेन भ्राता सबहुमानं प्रसादीकृते पादुके गृहीत्वा समापृच्छ्य च स्नेहविक्लवमाश्रमद्वारावधि विहितानुयात्रं बन्धुजनं, भरतो, "हन्त भोः, अद्यवास्मि,—

श्रद्धेयः स्वजनस्य पौररुचितो लोकस्य दृष्टिक्षमः
स्वर्गस्थस्य नराधिपस्य दयितः शीलान्वितोऽहं सुतः ।
भ्रातॄणां गुणशालिनां बहुमतः कीर्तेर्महद्भाजनं
संवादेषु कथाश्रयो गुणवतां लब्धप्रियाणां प्रियः ॥"

इति परितुष्यन्, प्रकामं विशदान्तरङ्गः सुमन्त्राधिष्ठितं रथमारुह्य अयोध्यामभिप्रतस्थे ॥

(२)

अथ कदाचिद्व्यपाये वनप्रवासे भ्रातुरुद्घातपरम्पराश्रवणेन निस्सहपरीतापप्रदग्धहृदयं साक्रोशनैष्ठुर्यं निजोपालम्भप्रवृत्तं भरतं, भवितव्यतायाः प्राबल्यमुपदर्श्य, तथाऽध्यवसितदैवपारतन्त्र्येणोपहतचेतसो निमित्तमात्रभूतस्य स्वस्यानपराद्धतायां प्रत्याययन्ती च, सुमन्त्रानूदिता सानुनयं कैकेयीत्थमुपन्यास्थच्चिरकाङ्क्षितोद्घाटनावसरं, निजवरद्वयाऽऽदानप्रवर्तकं, अनन्यथाभवं दशरथस्य शापम् । "पुरा किल मृगयां गतेन महाराजेन

कस्मिंश्चित्सरसि कलशं पूरयमाणो, वनगजबृंहितानुकारिशब्द-समुत्पन्नवनगजशङ्कया विपन्नचक्षुषो महर्षेश्चक्षुर्भूतो मुनितनयः शब्दवेधिना शरेण हिंसितः। तेन च सत्यभाषिणा महर्षिणाऽविषह्येन पुत्रव्यपायव्यलीकेन प्राणान्परित्यजता शप्तो महाराजः। —'त्वमप्येवं पुत्रशोकाद्विपत्स्यसे' इति। तत्र च मामपराधे निक्षिप्य दैवेन पुत्रको रामो वनं प्रेषितः। तन्मां न राज्यलुब्धां मन्तुमर्हसि। अपरिहरणीयो मुनिशापः पुत्रविवासनं विना कथं विरमति। किं च मातुलकुले वर्तमानस्य ते प्रकृतिभूतो विप्रवास इति राम एव प्रव्राजयितव्य आसीत्। यत्किल चतुर्दशदिवसा इति वक्तुकामया पर्याकुलहृदयया चतुर्दशवर्षाणीति मयोक्तं तदपि दैवतन्त्रकमेव" इति॥

तदा तत्सर्वमनूद्य सुमन्त्रः पुनर्न्यवेदयत्— "कुमार, वसिष्ठवामदेवप्रभृतीनां सर्वमेतद्विदितमनुमतं च" इति। तच्छ्रुत्वा विश्वस्तहृदयो भरतः, "हन्त त्रैलोक्यसाक्षिणः खल्वेते। यद्यनुमतं तेषां नात्र विचारणाया अवसरः। दिष्ट्या अनपराद्धात्रभवती" इत्युक्त्वा परितुष्य भ्रातृवात्सल्यादुत्पन्नमन्योः स्वस्यापराधान् क्षमापयित्वा च मातरमभिववन्दे। अजहाच्च तदादितस्तां प्रत्यन्यथाग्रहणेन सुचिरसम्भृतं हृदयकालुष्यम्॥

अथायोध्यारक्षामुपदिश्य निवर्तिते भरते, दक्षिणाशाविस्तीर्णेष्वरण्यभागेष्वविरलमास्तीर्णानामाश्रममण्डलानां दर्शन-कुतूहलिना, वृद्धोपसेवाहेवाकिना च मनसा, ससीतालक्ष्मणो

दाशरथिश्चित्रकूटाचलात्प्रचचाल । गच्छंश्च मार्गोपरोधिनं विराधं दण्डकारण्यप्रवेशनान्दीमुखोपहारतां नीत्वा, प्रशान्तचित्तविभूतिष्वाश्रमपदेष्वासेवमानो निजदर्शनोत्सुकिनः सत्याशिषः शरभङ्गप्रभृतीनमिततेजसो महर्षीन्, प्रतिश्रुत्य च तेषां निश्शेषपिशिताशनशल्यनिर्हरणं, स क्रमेणातिलङ्घ्य नानामृगगणाकीर्णं नदनदीशतैरन्तरा सीमन्तितमतिरमणीयसमृद्धिदर्शनीयतमं सुदूरं वनगहनमार्गं, अन्ततः प्राप कुम्भोद्भवोपदिष्टं, खरप्रमुखक्रूरक्रव्यादपातकाधिष्ठानं जनस्थानम् । तत्र च गोदावरीमारुतोपवीजितायां पञ्चवट्यां, लक्ष्मणोपरचितं, जनकनन्दिनीकरकमलोपात्तकलशांबुसेकपरिवर्धितावन्ध्यतरुषण्डोपशोभितं, अयोध्यानिर्विशेषोपभोग्यमाश्रमपदमश्रमेण चिरमुध्युवास ॥

तत्रैकदा दुरभिनिविष्टशूर्पणखाविरूपकरणप्रधर्षणेनामर्षितं चतुर्दशसहस्रमितराक्षसानीकमूर्धन्यं, सदूषणत्रिमूर्धानं कृताभिषेणनं खरमेकाकी रघुनन्दनो मुहूर्तात्कथाशेषतामुपनिन्ये । अनेन च निरवशेषजनस्थानरक्षोबलप्रमाथसंरम्भेण सम्भाव्यमानविक्रमक्रमधुराधर्षं रघुवीरमन्तरेण सन्धुक्षितस्य वैरानलस्य, निस्तुललावण्यलेखाभिनिवेशिनः कदर्थयतः कन्दर्पतर्षस्य च, युगपत्प्रतीकारविधेः कुहनासम्प्रदायेन जानकीहरणमेवौपयिकं निश्चित्य लङ्केश्वरः, कदाचित्तीर्थयात्रातः प्रतिनिवर्तमानस्य कुलपतेः प्रत्युद्गमनसमुदाचारेणासन्निहिते लक्ष्मणे, स्वयमुपहृतसलिलानुकम्पितबालवृक्षकां किञ्चिदिव परिश्रान्तां जानकीं निकषोपावेश्य,

समनन्तरदिनोपावर्तिनं तातस्यानुसंवत्सरिकश्राद्धविधिं कल्पविशेषेण स्वस्य च तातस्य च यथानुरूपं निर्वर्तयितुमाहितचिन्तं मन्त्रयमाणं रामभद्रं, लब्धान्तरो विश्वसनीयं परिव्राजकलिङ्गमङ्गीकृत्यातिथिरिवाभ्यवर्तत ॥

पूजितश्च ताभ्यां निजान्वयश्रुतादिकं वर्णयन् प्रसङ्गेन श्राद्धकल्पेऽभिज्ञत्वमात्मन उपन्यास्थत् । तेन च सञ्जातकुतूहलो राघवः पर्यपृच्छत्— "भगवन्, निवपनक्रियाकाले केन पितॄंस्तर्पयामि । विशेषोऽभिधीयताम्" इति । स प्राह— "हिमवतः सप्तमे शृङ्गे प्रत्यक्षस्थाणुशिरःपतितगङ्गाम्बुपायिनो वैडूर्यश्यामपृष्ठाः पवनसमजवाः काञ्चनपार्श्वा नाम मृगाः प्रतिवसन्ति ।

यैस्तर्पिताः सुतफलं पितरो लभन्ते
हित्वा जरां खमुपयान्ति हि दीप्यमानाः ।
तुल्यं सुरैः समुपयान्ति विमानवास-
मावर्तिभिश्च विषयैर्न वलाङ्घ्रियन्ते ॥"

इति । तच्छ्रुत्वा "तर्हि तानद्याहरिष्यामि" इति कृतसंरम्भं राघवं पुनरुवाच कपटकर्मन्दी— "अलमतिमनोरथेन । न ते मानुषैर्दृश्यन्त" इति । अथ सुधीरमुदाजहार रामभद्रः—"यदि हिमवान्सौवर्णान्मृगान्न मे दर्शयिष्यति बाणैः क्रौञ्चदारं तं विदारयिष्यामि" इति, तत्क्षण एव विद्युत्सम्पात इव लोचनहरो दूरादाविरभूत्काञ्चनपार्श्वो मृगः । "दिष्ट्या हिमवान्मयि परितुष्टः । अहो तातस्य भाग्यम्" इति मोदमानो रामस्तमुप-

च्छन्दयन्नर्घ्यमादायोपससर्प । मृगस्तु पूजामनवेक्ष्य पुरःपुरो धावन् राघवं सुदूरमाचकर्ष ॥

अथाक्षिगोचरमतिपतिते रामभद्रे, दशाननः स्वं रूपं गृहीत्वा भयविह्वलाङ्गीं भर्तारमेव पुनःपुनराक्रोशन्तीं कुररीमिव वृषदंशकः सीतां हठादाकृष्य रथेऽवस्थाप्य खमुत्पतितः। तथा ह्रियमाणां जानकीं दृष्ट्वा निजसखस्य दशरथस्यानृण्यमिच्छन् जटायुर्नाम गृध्रराजः "मयि स्थिते क्व यास्यसि" इति तर्जयन्नभिपत्य पापाशयमेनं पक्षाभ्यां विक्षिपन्, तुण्डेन खण्डयन्, नखरैश्च विदारयन्, सक्रोधं रुरोध । रावणस्तु रोषादुद्वृत्तनयनः प्रयुद्ध्यमानं पतगेश्वरमसिना दक्षिणांसदेशे गाढं प्राहरत् । तेन निकृत्तावयवः सद्यो गतायुरवनितलमाससाद जटायुः ॥

अत्रान्तरे एकप्लुत्यतिक्रान्तशरविषयं तमपूर्वहरिणमनुद्रुत्य विफलश्रमः सीतापतिः सचिन्तायासं यावत्प्रतिनिववृते तावत् सीताशून्यमुटजमपश्यत् । अथ प्रत्यासन्नतापसमुखाद्यथावृत्तमधिगत्य, विदीर्यमाण इव शोकेन बहु विलपन्, लक्ष्मणेन कथञ्चित्पर्यवस्थाप्यमानः काननभुवमनास्थया विचरन् वनौकसां धाम किष्किन्धामवाप । तत्र च निजाग्रजेन बलिना वालिना सदारापहारं निर्विषयीकृतो हनूमत्प्रभृतिभिः कतिपयैरेव स्निग्धैरुपास्यमानः सुग्रीवो नाम वानरमुख्यो महर्षिशापमहिम्ना वालिना दुरासदं ऋश्यमूकपर्वतशृङ्गमवाप्तभङ्गः कृच्छ्रेण प्रतिवसति स । अथानयोस्तुल्यदुःखयोः परस्परोपकारकृतप्रतिज्ञयोः सन्धिरघटिष्ट ॥

तदनु तदनुरोधेन तौ निरन्तरोपचीयमानस्निग्धभावौ, अतुलभुजबलावलेपं हेममालिनं वालिनं निगृहीतुकामौ नियुद्धाय तमभिमुखीकर्तुं प्राक्रमेताम्। अथ सुग्रीवक्ष्वेलिताकर्णनप्रज्वलितमन्युः शतमन्युसूनुरवधीरितताराप्रतिषेधवचनो गर्जन्नभिपत्य प्रक्रान्तविनयातिक्रममाक्रम्य विग्रहोद्धुरं सुग्रीवं मुष्टिनिर्घातनिष्पीडितग्रीवमुद्ग्रीवितासुमकरोत्। ततः सम्भ्रान्तेन हनुमता तामवस्थां प्रतिबोधितो रामभद्रस्तरुशाखाप्रच्छन्न एव वालिनं सप्तसालीविदारणदारुणमुखस्य शिलीमुखस्य शरव्यतामनैषीत्। स च तेन मर्मसु निहत्य सहसा निपातितः प्रस्रुतरुधिरप्रसेकपिच्छिले भूतले दुस्सहव्यथया कृतपरिसर्पणो धूळीधूसरिताङ्गः पतङ्ग इवासन्नास्तमयः सीदन् मुमूर्षुरिषुवाचितनामानं राघवमाहवानभिमुखं भृशमकुत्सयत। अस्थानोपक्रोशिनं तमुपगम्य रघुवीरः कृपाकुलमनाः समबोधयत्॥

"वागुराछन्नमाश्रित्य मृगाणामिष्यते वधः।
वध्यत्वाच्च मृगत्वाच्च भवाञ्छन्नेन दण्डितः॥

यवीयसो दाराभिमर्शनपातकी वध्य एव भवान्ननु। तेन हि युक्तदण्डानां योग्यमेव कृतमस्माभिः। मद्विहितेन च दण्डेन विगतपाप्मा त्वमनन्ताँल्लोकानवाप्स्यसि" इति॥

अतःपरं निरुत्तरो वाली प्रबलानुशयतरळितान्तरङ्गं शोचन्तं सुग्रीवं "ईदृशो लोकधर्मः" इति समाश्वास्य स्वतनयमङ्गदं तस्य हस्ते निक्षिप्य, "प्रतिगृह्यतामस्मत्कुलधनम्" इति

स्ववक्षःसंभुक्तां हेममालाञ्च तस्मै प्रतिपाद्य राघवं प्रसाद्य स्वर्गभागी बभूव। ततो यथाविधि तस्य हरिप्रवरस्यौर्ध्वदेहिकं निर्वर्त्य रामलक्ष्मणौ सुग्रीवं किष्किन्धाराज्येऽभ्यषेचयताम्॥

एवं निस्तीर्णस्वप्रतिज्ञाभरो निर्भरविरहोत्कण्ठाकुण्ठितानुभावो लक्ष्मणाग्रजः सुग्रीवस्य कृतज्ञतावीरुधः फलदर्शनानुकूलं कालं प्रतीक्षमाणोऽवतस्थे। ततस्तेन वानराधिनाथेन सीताविचयनार्थं सर्वासु दिशासु प्रेषितेषु प्लवङ्गमपुङ्गवेषु, दक्षिणापथप्रवृत्तः कुमारोऽङ्गदो वेलातटमासाद्य सम्पातिमुखाल्लङ्कायां स्थापितां जानकीमवगत्य महाजवं वायुसूनुं हनूमन्तं प्रोत्साह्य रावणराजधानीं प्रविचेतुमुद्योजयामास। स च निरतिशयमहिमा रामकार्यगरिमाणमनुसन्धाय पाथसान्नाथमेकोत्पातेनातिलङ्घ्य लङ्कामवाप॥

(३)

अथ निशाताहर्नाथमहसि निशामुखे, दशमुखमन्तरा प्रकुपितकृतान्तभ्रकुटिभीमवीक्षणस्य प्रथमावतारमार्गादेशक इव, प्रत्यादेशभूतामलकायाः प्रधाननगरीं यातुधानानां, अलक्षितसञ्चारोचितं वपुषा तनूभवन् स हनूमानुल्लङ्घितप्राकारगोपुरः प्रविश्य नवरत्नखचितसुमेरुशृङ्गभङ्गीमनोहरासु प्रासादपरम्परासु

स्वेच्छया विचचार । अन्ततः समधिगम्य सन्ततोल्लसितलक्ष्मी-प्रसादमेदुरं निशाचरेन्द्रप्रासादं, अन्विष्य च दिव्यभोगोचित-सामग्रीविशाला विश्रमशालाः निरन्तरप्रत्युप्तरत्नावळीभासमानान् विमानान्, निद्रावशस्रस्तमुत्तानशयान्तःपुररमणीरमणीयतल्प-गर्भान् गर्भागारांश्च, कुत्रापि जनकराजनन्दिनीमप्रेक्षमाणः पव-मानानन्दनः, "अहो व्यर्थो मे परिश्रमः" इति विषीदन् याव-दुन्नताग्रमेकं हर्म्यशृङ्गमारुह्य परितः पश्यति तावदविचितचरी-मदूरस्थां प्रमदवनराजिमलक्षयत् ॥

प्रविश्य च तां कल्पितक्रीडाशैलप्रेक्षणीयां, विचरदण्डज-वाचालितदीर्घिकाशीतलितां, परिपश्यन्, कस्यचित्पादपस्य मूल-माश्रित्य स्थितां ध्यानसंवीतहृदयां अनशनक्षामां कातर्यसंगूढस्तनो-दरीं एकवेणीधरां दुर्दिनान्तर्गतामिव चन्द्रलेखां आरक्षकराक्षसी-गणपरिवृतां कामपि विरहव्यथामिव मूर्तिमतीं वरवर्णिनीम-पश्यत्। "केयं भवेत्" इति क्षणं विचिकित्सन् स द्रागुपासीदन्तं परिजनकरावलम्बितदीपिकावळिद्योतितमार्गं निसर्गताम्रायताक्षं क्षणदाचरचक्रवर्तिनमुद्वीक्ष्य कोटरान्तरितो भूत्वा वृत्तान्तं जिज्ञासुरवतस्थे ॥

तदानीमतिवेलसम्भृतमन्मथोन्मथितहृदयः पौलस्त्यस्तां मानवतीमुपसृत्य बहूनि प्रलोभनानि प्रस्तुवन्ननुकूलयितुं प्रायतत। शश्वन्निष्ठुरमधिक्षिप्य तृणवदवधीरितोऽपि तया, रामापवादगर्भि-तैरात्मश्लाघोपन्यासकुत्सितैर्दुःश्रवैर्वचोभिस्तां स निर्लज्जो निरन्तरं

तुतोद। अथ च क्रुद्धा सा पतिदेवता "ननु देवि" इति सचापलमुपासीदन्तं निर्दहन्तीव दृष्टिपातेन तं पापात्मानं "शप्तोऽसि" इत्यवाभर्त्सयत। अल्पैरप्येभिरक्षरैः प्रतिबद्धतेजा वज्राहत इव क्षुभ्यन् स रक्षःपतिः सद्यो निववृते॥

अथ निर्गते रावणे, निद्रामुद्रिताक्षीषु च राक्षसीषु, कोटरादवरुह्य विदितवेदितव्यो मारुतिः सभक्त्युन्मेषं रघुवीरापदानानि गृणन् विनीतो देवीमुपससर्प। विविधशङ्काविकल्पेन प्रथममजातप्रत्ययापि रामपत्नी सुश्लिष्टभाषिणि, सन्निधापिताभिज्ञानाङ्गुलीयके तस्मिन् विमृश्य विश्वासमुपागमत्। तन्मुखेन च वियोगविधुरं, सुग्रीवसाहाय्येन प्रतिपन्नसमरधुरं राघवधुरन्धरमवगत्य समाश्वासितमानसा तमाशीर्भिरभिनन्द्य, भर्त्रे ग्राहितयथोचितसन्देशं विससर्ज॥

ततो हनूमान् निजागमनमन्तरेण रावणं विदितार्थं कर्तुमिच्छन् व्यञ्जयितुकामश्च हरिसेनावीरपराक्रमलवं परिबभञ्ज मन्दोदरीमानसोल्लासिनीमशोकवनिकाम्। तेन च मृणालवदुत्पाटितान् सालवृक्षान्, मुष्टिना भग्नं दारुपर्वतकं, पाणितलावमृदितानि लतागृहाणि, नादमात्रेण विसंज्ञीकृतान् प्रमदवनपालकांश्च दृष्ट्वा भीताः किङ्करराक्षसा महाराजायापूर्वमिमं वृत्तान्तं निवेदयां-
व
चक्रुः। तच्छ्रुत्वा इदंप्रथमोपस्थितनिकारः संमूर्छत्क्रोधविकारः पिशिताशनेन्द्रः स वानरग्रहणाय किङ्कराणां सहस्रमाज्ञापयामास। ते तु हनुमता वृक्षैरेव निहत्य व्यापाद्यन्त। अनन्तरागतान् पञ्च-

सेनापतीन् काञ्चनतोरणपरिघेण घातयित्वा मारुतिर्मुष्टिनिष्पेषणेन कुमारमक्षमप्यक्षिणोत् । ततः सक्रोधं निर्गतेनेन्द्रजिता सह चिरं प्रयुद्धय स व्यपनीतयुयुत्साकण्डूतिर्निशाचरेन्द्रदर्शन-कौतूहलेन प्रबलास्त्रवर्षिणस्तस्य स्वेच्छया वश्यतामयासीत् । नीतोऽभूच्च पाशैर्बद्धो राज्ञः सन्निकर्षम् ॥

तत्र च, "सुरदानवैर्मनसाप्यचिन्त्यामिमां लङ्कां मामप्य-भिभूय प्रविष्टः किल वानरः । किमयं त्रैलोक्यविजयगर्वितेन कम्पितकैलासशैलेन दोर्मददुर्ललितेन मया अधिक्षिप्तस्य भगवतो नन्दिनः शापः कपिच्छद्मना मामिदानीमुपावृत्त" इति वितर्का-कुलहृदयं, मैथिलीप्रत्यर्पणमन्तरेण विच्छिन्नप्रार्थनोपक्रमेण विषण्णे-न भ्रात्रा विभीषणेन अन्वासितं, राक्षसराजमुपगम्य हनूमान् दूत-समुदाचारमङ्गीकृत्य कुशलमन्वयुङ्क्त । तेन च सावज्ञं "कस्त्वं शाखामृग" इति पृष्टः पवनसूनुः सुधीरं स्वगोत्रोपन्यासपूर्वक-मात्मानं रामदूतं वर्णयन्, विभीषणानुज्ञातो रामशासनमित्थ-मुदैरयत् ॥

"वरशरणमुपैहि शङ्करं वा
प्रविश च दुर्गतमं रसातलं वा ।
शरवरपरिभिन्नसर्वगात्रं
यमसदनं प्रति यापयाम्यहं त्वाम् ॥" इति ।

तच्छ्रुत्वा सगर्वोपहासं प्रस्तुतनिजवीर्यापदानवर्णनं दशकण्ठं, सावहित्थमित्थमप्राक्षीन्मारुतिः, "एवंविधेन भवता किमर्थं तस्य

प्रच्छन्न दारापहरणं कृतम्" इति । तमनुमोदमानो राक्षसोऽप्य-राक्षससत्त्वो विभीषणो निरूपयामास—

"अपास्य मायया रामं त्वया राक्षसपुङ्गव ।
भिक्षुवेषं समास्थाय छलेनापहृता हि सा" ॥ ९ ॥

इति । सद्यः क्रोधसंरक्तनयनं दृष्ट्वा तु भ्रातरं सानुनयमित्थं स पुनराचचक्षे—

"प्रसीद राजन् वचनं हितं मे
प्रदीयतां राघवधर्मपत्नी ।
इदं कुलं राक्षसपुङ्गवेन
त्वया हि नेच्छामि विपद्यमानम्" ॥ १० ॥ इति ।

अथ तदानीमप्यनुक्तग्राहिणं, स्ववीर्यावलेपमूर्च्छितं, "कथं लम्बसटः सिंहो मृगेण विनिपात्यते" इति कृतमुधाविकत्थनं प्रक्षीणपुण्यं रक्षःपतिं नामग्रहणेन निर्मर्यादं तथा बहु विनिनिन्द हनूमान् यथा प्रदीप्तक्रोधेन, "लाङ्गूलमदीप्य विसृज्यतामयं दूताधम" इति किङ्कराननुशासता तेन, "यदि तेऽस्ति धनुः-श्लाघा दीयतां मे रणो महान्" इति राघवाय ग्राहितसन्देशः स निरस्यत ॥

अनन्तरं भ्रातुरपरिहार्यया विप्रतिपत्त्याऽतिमात्रं निर्विण्णो विभीषणः पुनस्तमुद्बोधयामास—"राजन्नाप्तवचः किन्न शृणोषि । सीतापहरणेन न केवलमधर्मः, दुस्तरो बलवद्विग्रहश्चोपनिपातितः ।

हन्त सर्वथा रक्षःकुलस्य विनाशोऽभ्यागत इति मन्ये" इति। किन्तु हितमनाद्रियमाणेन विपद्यमानभाग्येन दशग्रीवेण, क्रोधोद्वृत्तारुणविंशतिनयनमुद्वीक्ष्य, "शत्रुपक्षमाश्रितो निर्भयं मामभिभाषमाणो राक्षसाधमोऽयं सद्यो निर्वास्यताम्" इति धिक्कृतः स धर्मात्मा, "एवं प्रशासितोऽहमनपराद्धः स्वयमेव प्रयामि" इत्युक्त्वा रामपादमूलमाशिश्रयिषुः निर्जगाम ॥

उत्पत्य च गगनमार्गेण, वाराशिमुल्लङ्घ्य, प्रत्यागतहनूमदावेदितवृत्तान्तमावेलातटमागत्य पुरतो दुश्शकप्रसरत्वात् तत्रैवावस्थापितस्कन्धावारं वानरानीकपारावारमुपासदत्। राक्षसत्वादाशङ्कनीयशत्रुभावं तमापतन्तमुद्वीक्ष्य तन्निग्रहार्थं कृतसम्भ्रमेषु वानरवीरेषु, विभीषणः सञ्जातप्रत्यभिज्ञं हनूमन्तमुपसृत्य, "मदागमनं देवाय निवेदय" इति पार्थयामास। स च हृष्टो राघवं व्यजिज्ञपत्—

"राजंस्त्वत्कारणादेव भ्राता निर्विषयीकृतः।
विभीषणोऽयं धर्मात्मा शरणार्थमुपागतः" ॥ इति।

संश्रितवत्सलो दाशरथिर्लक्ष्मणेन तमानाय्य प्रतिनन्द्य च, "अद्य प्रभृति मद्वचनाल्लङ्केश्वरो भव" इत्यनुजग्राह ॥

दिष्ट्या विभीषणागमनेन कार्यसिद्धिमाशंसमानो रघुपतिस्तं, सागरतरणे कमुपायं पश्यसीत्यपृच्छत्। तेन च, "यदि स्वेनैव मार्गं न ददाति समुद्रो दिव्यमस्त्रं तावद्विस्त्रष्टुमर्हति देव" इति

विज्ञापिते रामे तदनुतिष्ठति, जलमध्यात्सरभसं वरुणः स्वयमुदतिष्ठत् । तत्प्रसादेन क्षणाद्गाधताभाजं सलिलनिधिं ससैनिक उत्तीर्य रघुवीरो लङ्कासीम्नि सुवेलकटके कटकं स्थापयामास ॥

अथ क्रमान्निवेश्यमानासु सेनासु तत्तद्वृन्दपरिग्रहेषु परीक्ष्यमाणेषु, पुस्तकप्रामाण्यात्कुतश्चिदप्यविज्ञायमानौ द्वौ वनौकसौ गृहीतौ । विभीषणो निपुणं निरीक्ष्य, "राक्षसेशमन्त्रिणौ शुकसारणावेतौ रन्ध्रान्वेषिणौ" इति तयोर्याथातथ्यं विभावयामास । तौ च दयानिधी रामः पौलस्त्याय, "रणातिथिस्त्वां द्रष्टुमहमागत" इति ग्राहितसन्देशौ विमोचयामास ॥

अथ प्रावर्तत पुङ्खानुपुङ्खप्रहितनिरन्तरशरवर्षसंपादितोद्गाढदुर्दिनोदयानामाशराणां, निजभुजोत्पाटितानेकानोकहनिवहशैलशृङ्गोत्करमात्रप्रहरणानाञ्च वानरानीकानां निरवकाशीकृतगगनाभोगस्तुमुलः संपरायः । तत्र चोत्पुच्छकर्णवानरप्रवरगृहीतकण्ठनिष्पेषणोद्गलितनयनविकृतमुखरक्षोगणाकीर्णं, क्रुद्धनक्तञ्चरकरपरिभ्रमितकृपाणिकाशतसम्पातप्रविदीर्णोद्भटवानरभटं, प्रवहदसृक्पूरवाह्यमानविपन्नहरिरक्षःकुणपराशिबीभत्सं, पश्यतामनिमिषमनिमिषतां प्रतिभयतामवहत्समराजिरम् । तदानीमनपेक्षितवन्दीग्रहसाहसमप्सरोगणस्वयंवरणोत्सवसंपादकं वीरस्वर्गमापुरसङ्ख्याः सङ्ख्ये नैर्ऋतवीराः ॥

अथ विपद्यमानाभ्युदये राक्षसकुले, समरचकितासु पराङ्मुखतया पलायमानासु पृतनासु, निहतेषु प्रहस्तनिकुम्भकुम्भकर्ण-

प्रमुखेषु मुख्यपुरुषेषु, व्यपयान्त्याञ्च स्वस्मात् आवैश्रवणनिरासात् स्वायत्तीकृतायां विजयश्रियां, परित्रातव्यभूतनिजात्मापि सचिववचांस्यनपेक्ष्य दुर्व्यवस्थितनियतिपारतन्त्र्येण मुह्यन्, वीरमानी दशवदनो, मदनावेशदाहपरिध्वस्तमतिः सीतामृगतृष्णिकामेव भूयोऽन्वधावत्। मिथ्या तां मोहयिष्यन्स दुरात्मा, रामलक्ष्मणयोः शिरःप्रतिकृती आनाय्य, "अयि मुग्धे, अद्यापि किमनुबध्नासि, गतायुषि तापसहतके तस्मिन् भावम् । पश्येमे कुमारेणेन्द्रजिता हतयोस्तयोर्मानुषपोतयोः शिरसी" इति दर्शयन् दयितागमनवृत्तान्तश्रवणदरोच्छ्वसितं तस्याः पतिव्रताया मानसं निर्दयं निर्ममन्थ ॥

अत्रान्तरे रामेण निहतमिन्द्रजितमख्यात् संभ्रान्तः कोऽपि किङ्करः। तदाकर्णनव्यलीकपरिभूतो लङ्केश्वरस्तथा विव्यथे, यथा स स्वपरिजनानामप्यनुकम्पनीयो बभूव । विललाप च सन्तापविह्वलः—"किमिदानीमनर्थहेतुभूतया सीतया, त्रैलोक्यविजयेऽपि विफलया चपलया श्रिया च । किं भोः कृतान्तहतक! सुतप्रणाशपरिदीने मयि अद्यापि कातरोऽसि। हा धिक्!

इदानीमपि निःस्नेहो वत्सेनेन्द्रजिता विना ।
कष्टं कठोरहृदयो जीवत्येष दशाननः ॥ १२ ॥" इति ।

विलपंश्च मूर्च्छितः पपात भूपृष्ठे ॥

तदनु स्वमभियुयुक्षमाणं रोषेणाभिपतन्तं राघवं किङ्करमुखाच्छ्रुत्वा स प्रज्वलितक्रोधो मूर्तिमानिव वीरो रसः, "क्वासि

कासि" इति समुद्यतासिः सहसोदतिष्ठत् । उत्थाय च, "रे रे क्षुद्रतापस, पश्यन्तु त्वामद्य निराशा गीर्वाणाः, वज्रीभकुम्भतट-पाटनकठोरधारस्यास्य कृपाणस्य क्रोधोपहारतां नीतम्" इति जगर्ज । पुनः सीतां निरूप्य, "आः, अस्याः कारणेन किलैतावाननर्थः" इति तां हन्तुकामः परिपतन्नासन्नपरिजनेन यत्नान्निवारितः स पापात्मा सद्यः सूतोपनीतं स्यन्दनमास्थाय सङ्ग्रामावतरणत्वरया निर्ययौ ॥

ततस्त्रिलोकीजेगीयमानपरस्परवीरापदाननिकषायिते तस्मिन्महति युद्धे, सरोषौत्सुक्यं निभृतं निरीक्षमाणेषूभयपक्षीयेषु, लीलयैव द्वेधाकृत्य प्रतिपक्षप्रहितां कालान्तकोपमां शक्तिं, तत्क्षणमिन्द्रेणोपप्रेषितं रथमारूढेन, निरन्तरबाणवर्षविरुग्णारातिस्यन्दनहयध्वजादिना, प्रळयसूर्यदुर्निरीक्षेण, अमोघवेधं वेधसो दिव्यमस्त्रं प्रयुञ्जानेन, जिताशेषरथिना दशरथिना निकृत्तदशशिरःपतनसमकालाभिवृष्टसुमनःसुमनोवृष्टिमेदुरमुत्सादितो रावणः । सद्यस्तद्वचनाद्विभीषणश्च लङ्कापतिर्बभूव ॥

एवं स्ववीर्यमहिम्ना निहत्य युधि त्रैलोक्यविद्रावणं रावणं, तदभिनिवेशिनश्च भीमकर्मणो रक्षोगणान्, अराक्षसवृत्तेर्विभीषणस्याभिषेकेण कृतकृत्यो राघवः शत्रुकुलनिवासादनुभूतानल्पदुःखां सीतामाश्वासयितुकामस्तद्दर्शनमनुचिन्तयामास ॥

तदा विभीषणः प्रविश्य स्वयमेव कृतोपसर्पणां देवीं राघवाय न्यवेदयत् । रामस्तु जनापवादपरिजिहीर्षया प्रकटमित्थ-

माज्ञापयामास। "विभीषण, न मां द्रष्टुमर्हति रजनिचरावमर्श-जातकलङ्का, इक्ष्वाकुकुलकीर्तेः कालुष्यहेतुभूता जानकी। तत्रैव तावत्तिष्ठतु" इति। सीतापक्षपातेन प्रसादार्थीनि तन्निर्बन्ध-वचनानि च निर्दयमवधीरयामास॥

एवं धिक्कृतमात्मानं विज्ञाय मानवती जनकयजनसंभवा, विमुक्तजीवितप्रत्याशा, अग्निप्रवेशकृतनिश्चया भर्तुरनुज्ञां प्रति-पालयामास। अनुज्ञाता च तेन विकसितमुखी हंसीव पद्मवन-मनिर्विण्णा विभावसुमविक्षत्। तदानीमाश्चर्यमाश्चर्यमिति चिन्तीय-माणे द्रष्टृलोके रामः सद्योजातानुशयो लक्ष्मणं सहसा तां साहसा-न्निवारयेत्यादिदेश। किन्त्वेतावतैव सा पतिदेवता, ज्वलनं प्रविष्टा शीतसुखस्पर्शमादधतस्तस्मात् कनकमालेव वर्धितप्रभा निर्विकारं निरमज्जत्। तां च स्वयमेव भगवान् हव्यवाहनः समादाय रावणान्तिकमभिवर्तमानो व्यजिज्ञपत्—

"इमां गृहीष्व राजेन्द्र सर्वलोकनमस्कृताम्।
अपापामक्षतां शुद्धां जानकीं पुरुषोत्तम॥ १३॥

इमां भगवतीं लक्ष्मीं जानीहि जनकात्मजाम्।
सा भवन्तमनुप्राप्ता मानुषीं तनुमास्थिता"॥ १४॥

इति। राघवः सप्रमोदं मैथिलीमङ्गीकृत्य, "अस्याः शुद्धिं जानतापि मया लोकप्रत्ययार्थमेव नैष्ठुर्यमित्थमाविष्कृतम्" इति वैश्वानर-माश्वासयामास॥

तदनु समग्रैस्सिद्धविद्याधरगन्धर्वाप्सरःप्रभृतिभिः देवैः विजयवाग्भिः गीतनृत्तादिभिः पुष्पवृष्ट्या चाभिनन्दितमङ्गलो, दशरथानुमत्या च तैरेवाभिषिक्तः पृथिवीराज्ये, सीतया सह पुष्पकमारुह्य सबन्धुमित्रो रघुपुङ्गवः साकेताभिमुखं प्रतस्थे। मध्येमार्गमवतीर्य जनस्थाने कुलपतिसपर्याकल्पितविश्रमो विचरितचरमाश्रमपदं सीतया सह सस्नेहानुस्मरणमनुभवन् स निर्वृतो यावदस्थात्, तावत् आसीताहरणोदन्तश्रवणात् अग्रजसाह्यार्थं समाहृतप्रभूतसेनासमुदयानुकर्षणमन्थरं प्रसरन्नुररीकृतलङ्काभियानो भरतस्तं देशमनुप्राप्तो भ्रात्रा समगच्छत ॥

तत्र च बन्धुजनाभिनन्दितः सीतापतिः कैकेयीवचनात् भरतप्रत्यर्पितां राज्यधुरामङ्गीकृत्य वसिष्ठवामदेवादिभिर्महर्षिभिः प्रकृतीः पुरस्कृत्य यथाविधि निर्वर्तिताभिषेकमङ्गलः पुष्पकेणैव सर्वैः समुपेतः साकेतमवाप। अथाधिवसन्निक्ष्वाकुराजधानीमप्रतिहतशासनः पावनापदानः स नक्तञ्चराभ्युदयधूमकेतुरापादितत्रिलोकीभद्रो रामभद्रः सुचिरं व्यलासीत् ॥

इति श्रीरामचरितम्।

इति श्रीमन्महालिङ्गकविकृतिषु भासकथासारे
द्वितीयो भागः सम्पूर्णः।

॥ समाप्तश्चायं पूर्वार्धः ॥

---

## भासीयश्लोकानुक्रमणिका ॥

## Index of Verses quoted from the Originals

### ( for Part II )

# OPINIONS ON THE KINKINIMALA.

(SELECT PORTIONS.)

---

1. "I congratulate you on their high literary merit ......I earnestly hope that it may be possible for you to continue the publication of your admirable poetic works."— FRANKLIN EDGERTON, *Yale University, Connecticut.* May 29, 1934.

2. "Attractive little book of graceful Sanskrit poems."—L. D. BARNETT, (*British Museum.*) London, 30 May, 1934.

3. "I admire the fluent and elegant Sanskrit of your poems. It is a pleasure to see how much Sanskrit is still a living language."— PROF. M. WINTERNITZ, *Prague University, Czechoslovakia.* 31—5—34.

4. "Your work is marked by felicity of expression, command of metre and skill in composition. Your translations, in my opinion, represent very creditably the originals and testify to the almost infinite capacity of Sanskrit to express human thought and emotion."–A. BERRIEDALE KEITH, *Edinburgh University.* 27 June, 34.

5. "I have much enjoyed them and I congratulate you on your success in reproducing the grace and charm of classical Sanskrit poetry."— E. J. RAPSON, *Cambridge University.* 16-6-34.

6. "I read the little volume with keen enjoyment."
—RT. HON. V. S. SRINIVASA SASTRI,

7. "I have read the book and admired many pieces in it for their genuine poetic flavour and for their charming style."— PROF. M. HIRIYANNA, *Mysore*.

8. "Writes with admirable ease and fluency......... Sanskrit poems which have a modern note."—
DIWAN BAHADUR K. S. RAMASWAMI SASTRI,

9. "The collection of poems here published is only a part of his lyrical effort. He has more to publish if he got the chance. His language is musical and generally familiar and easy, but occasionally beyond the depth of the average student. The verses run with surprising smoothness and give you an idea of the possibilities of the language in capable hands."—
MR. T. R. V. SASTRI, *In the Hindu Literary Supplement*, *May 15*, 34.

10. "The translations show a good deal of command over Sanskrit and have been carried out with care and in a spirit of fidelity to the original poems.........deserves the thanks of all lovers of classical poetry for this new venture."— THE AMRITA BAZAR PATRIKA, *Calcutta*. May 6, 34.

11. "Whether in the translations or in the original compositions, a high standard is maintained."—MR. V. R. R. DIKSHITAR, *Dharmarajya, Madras* April 21, 1934.

12. "A welcome indication of the life that pulsates in this "dead" language.........In some of these the author's close observation of Nature is evident. Some of the poems are translations of well-known passages in English and these have been very well done indeed ......... Wields great command over the language and writes in an easy flowing style. Some of the poems can be set to music ......... We eagerly await the publication of the other volumes in the series."—MR. A. B. GAJENDRAGADKAR, *In the Aryan Path, Bombay. Vol. No. 10, Oct. 1934.*

13. "A master of metre and melody."—THE ARDRA, JAFFNA. *Vol. III, Part I. January 1935.*

14. "This is almost the first attempt during recent times by an English educated scholar to produce a book of poems in Sanskrit possessing a modern flair and redolent with the taste and culture of English literature ......... has kept before his mind's eye the ideal of Kalidasa."—MR. K. BALASUBRAMANIA IYER, *In the Oriental Research Journal, Madras, 1934.*

15. "स्वकीयैः लघुभिरप्यलघु-समाधि-समुज्जृम्भितैः अभिज्ञ-मनोहरैः पद्यगुम्फैः ...... आनन्दयति...... । पचेलिमः शब्द-सन्दर्भः, औचित्यानुसार्यर्थसङ्घटनं, ईषदलङ्कारोऽपि गुणभरितो रसभावातिरेकः प्रतिकाव्यमत्र सहृदयैश्चर्व्यमाणः नियतमावेदयति शास्त्रिमहाशयस्य महाकवित्वापादयित्रीं प्रतिभां व्युत्पत्तिं च। ........प्रसादमाधुर्यश्लेषादिभिर्गुणगणैः पूर्वतनकविभ्यो लेशतोऽप्यन्यून इतीयमुक्तिर्न वस्तुतत्वमतिवर्तते । नवरसभरितानि स्वभावोक्तिसुन्दराणि अनुप्रासाद्यलंकृतानि उक्तिप्रत्युक्तिचणानि सुन्दरसुभाषितभूषितानि लघून्यपि बहूनि काव्यान्येकत्र समातन्वन्नयं कविग्रामणीः......।"— PANDIT K. S. RAMASWAMI SASTRI, *Baroda, in the Udyana Patrika, Vol. VII, Parts 9 & 10*, 1934.

16. "सरसरमणीयतया सहृदयजनसंसेवनीयमिदं......।"— THE SAMSKRITA SAHITYA PARISHAT, *Vol. XVII, No. 4, August 1934, Calcutta.*

17. "నేనెఱింగినవరకు సంస్కృతమున వెలువడిన ఖండకావ్య సంపుట రూపగ్రంథములలో నీ "కింకిణీమాల" యే మొదటిది.........శ్రీ మహాలింగ శాస్త్రిగారు సంస్కృతాంగ్ల భాషా పారంగతులు. కావున భాషాద్వయ కవితారహస్యములను బాగుగ గుఱుతెఱిఁగి చాలయేఁడులనుండి తాము రచించిన ఖండకావ్యములను, తమ భాషాంతరీకరణములతోఁ బాటు, పేర్చికూర్చి........ వెలువరించినారు.................శైలి మృదుమధురమై పండితజన రంజకమై యున్నది".— B. V. RAMANAYYA, *in the "Bharati" Madras, June 34.*

# KAUNDINYA PRAHASANA.

1. "Depicting a stratagem employed by a human 'parasite' to grab at the delicacies of a miser's table"—THE ARDRA, Jaffna.

2. "Its dramatic motive is of the slightest, but he has yet woven around it action and dialogue which are of a stimulatingly comic character." TRIVENI, Madras.

3. "The rare power of parody and burlesque which you display in the presenting of it..... the dialogue sparkles with wit and the felicity and flow of the style are admirable"—MR. M. R. RAJAGOPALA AIYENGAR, Asst. Prof. of English, The Presidency College.

4. "I much appreciated the simplicity of its style and the naturalness of the sentiments expressed in it.—MR. M. HIRIYANNA, Mysore.

5. "......command of Sanskrit, poetic fancy, literary taste and sense of melody.........also a keen sense of humour, rather unusual among Sanskrit authors.—SIR P. S. SIVASWAMI IYER.

6. न केवलं शब्दरचनायां न केवलमर्थघटनायां न केवलं विवक्षितार्थप्रतिपादनसमर्थपदप्रयोगे, अपि तु रसविशेषमङ्गिनं कृत्वा तत्र सर्वथा निहितदृष्टिः असंबन्धिलेशमप्यस्पृशन् समुचितालङ्कारविन्यासेनेष्टमर्थं झटित्याविर्भावयन् रूपकविशेषनिर्माणेऽपि

प्रगल्भते। ...... अस्य कवेः प्रतिभा संविधानशक्तिश्च कस्य सहृदयस्य नाह्लादाय भविष्यति ॥—The Udayana Patrika.

## SAMBHU CARYOPADESA.

1. "The Sanskrit versification is at once smooth and charged with an eager eloquence"—THE HINDU Lit. Suppt.
2. "It shows all the grace and elegance which we have learnt to associate with your Sanskrit slokas."—MR. M. R. R. AIYENGAR.
3. "ஸ்லோகங்கள் வெகு சுலபமானதும் அழகியதுமான நடையிலே உள்ளன.........பல பாகங்கள் மனதைக் கவர்கின்றன."—SWADESAMITRAN.
4. "A master of melodious and stately Sanskrit".—MR. K. S. RAMASWAMI SASTRI in the Foreword.
5. "Elegant in diction and elevated in substance."—THE ARDRA.
6. "भाषाया माधुर्येण उपदेशानां गुरुत्वेन भूमिकायाश्च गाम्भीर्येणातिमात्रं हृदयहारीदं पुस्तकं अवश्यमेव पठनीयं बालकैरस्मद्देशीयैः"—Samskrita Sahitya Parishat, Calcutta.

## LAGHU RAMA CHARITAM (2nd Edn.)

"There could be no better introduction to Sanskrit poetry than the verse of Valmiki especially as found in this skilful abridgement"—HINDU Lit. Suppt. .........

# WORKS BY MAHALINGA SASTRI.

1. KINKINIMALA. (First series) A collection of shorter poems about fifty in number including songs and translations from English literature: 1934. Feather weight paper, cloth bound 2—0—0

   Do. Paper cover ... 1—8—0

2. BHASAKATHASARA. (in three Parts).

   a. Part I. Containing narrations in easy and fluent prose, of the Bhagavata and Bharata dramas of Bhasa, with summaries of the stories in English and glossary. 1934 Edition. ... 0—8—0

   b. Part II Do. of the Ramayana dramas with summaries of the stories in English and glossary 1935 Edition ... 0—8—0

   c. Part III Do. of the dramas based on traditional themes with summaries of the stories in English and useful grammatical notes. 1936 Edition. (Intermediate Text in the Madras University for 1936 and subsequent Examinations) 0-14—0

   d. TRANSLATION AND NOTES with a critical Introduction, of the above Part III, for Intermediate students ... ... 0-12—0

3. KAUNDINYA PRAHASANAM. A farcical play in two Acts—with Preface and notes 0—8—0

4. SAMBHU CARYOPADESAM. A metrical translation in abridged form of Mr. K. S. Venkataramani's A Day with Sambhu, with a foreward by Diwan Bahadur K. S. Ramaswami Sastrigal 0—4—0

5. LAGHU RAMA CARITAM. An abridgement of the Valmiki Ramayana for young pupils. 2nd Edn. 0—6—0

6. KUMARASAMBHAVA of Kalidasa. Cantos 5, 6 and 7 prescribed for the Intermediate Examinations (Madras University) commencing from 1938, with Introduction, Translation, Notes etc. by Mahalinga Sastri.

CANDRALOKA Chapter V. Prescribed for B. A. Examinations commencing from 1938 with Introduction, Translation and Notes by Do. (to be shortly published.)

Apply to the Manager, SAHITYA CANDRA SALA, Madura.

॥ किङ्किणीमाला ॥

# KINKINIMALA

A FIRST SERIES OF SHORT LYRICS

BY

Y. MAHALINGA SASTRI, M. A, B. L.,

*containing fifty pieces in all—*

DIVIDED INTO TEN SECTIONS:—

I. स्तुतिगीतानि. II. नायक-नायिका-भाव-प्रपञ्चः. III. गीतकाव्यद्वयम्. IV. Nature lyrics. V. सपञ्चक रङ्ग खण्डकाव्यद्वयम्. (Anyapadesas) VI. Translated poems and a पञ्चक. VII. अष्टप्रासः. VIII. प्रशस्तयः. IX. Two pieces affording comic relief. X. सुभाषितानि and कविहृदयम्.

Cloth Bound Rs. 2—0—0

Paper Bound Rs. 1—4—0

*N. B:*—The proceeds of the sale of this book go to a *Fund* for the publication of the other poetic and dramatic works of the author.

4. SAMBHU CARYOPADESAM. A metrical translation in abridged form of Mr. K. S. Venkataramani's A Day with Sambhu, with a foreward by Diwan Bahadur K. S. Ramaswami Sastrigal C—4—0
5. LAGHU RAMA CARITAM. An abridgement of the Valmiki Ramayana for young pupils. 2nd Edn. 0—6—0
6. KUMARASAMBHAVA of Kalidasa. Cantos 5, 6 and 7 prescribed for the Intermediate Examinations (Madras University) commencing from 1938, with Introduction, Translation, Notes etc. by Mahalinga Sastri.

   CANDRALOKA Chapter V. Prescribed for B. A. Examinations commencing from 1938 with Introduction, Translation and Notes by Do. (to be shortly published.)

Apply to the Manager, SAHITYA CANDRA SALA, Madura.

॥ किङ्किणीमाला ॥

# KINKINIMALA

A FIRST SERIES OF SHORT LYRICS

BY

Y. MAHALINGA SASTRI, M. A, B. L.,

*containing fifty pieces in all—*

DIVIDED INTO TEN SECTIONS:—

I. स्तुतिगीतानि. II. नायक-नायिका-भाव-प्रपञ्चः. III. गीतकाव्यद्वयम्. IV. Nature lyrics. V. सपञ्चक गर्भे खण्डकाव्यद्वयम्. (Anyapadesas) VI. Translated poems and a पञ्चक. VII. अष्टप्रासः. VIII. प्रशस्तयः. IX. Two pieces affording comic relief. X. सुभाषितानि and कविहृदयम्.

Cloth Bound Rs. 2—0—0

Paper Bound Rs. 1—4—0

*N. B:*—The proceeds of the sale of this book go to a *Fund* for the publication of the other poetic and dramatic works of the author.

# BHASAKATHASARA

# भासकथासारः ॥

## Part III

## तृतीयो भागः ।



Y. MAHALINGA SASTRI M. A., B. L.

॥ श्रीरस्तु ॥

# भासकथासारः ॥

## तृतीयो भागः ।

# BHASAKATHASARA

## Part III

---

BY

Y. MAHALINGA SASTRI M. A., B. L.,
SAHITYA CHANDRASALA,
TIRUVALANGADU, (Tanjore Dist.)

---

With a Foreword
BY
Prof. A. BERRIEDALE KEITH D. C. L., D. Litt.,
*Regius Professor of Sanskrit,*
Edinburgh University, Scotland.

**July 1955**

# FOREWORD

Sanskrit literature for all its great merit is deficient in simple prose narratives on interesting themes and it is therefore a matter for satisfaction that Mr. Y. Mahalinga Sastri should have conceived the happy idea of supplying a manifest want by presenting us with summaries of the narratives of the plays ascribed to Bhasa. Whatever their origin, the originality and interest of these dramas are beyond question, and no better introduction to their study could be imagined than these versions, which capture the spirit and attraction of the poet's work. The style is worthy of the subject matter ; it is natural, clear, precise, free from artificiality and complexity, and flows easily, avoiding the temptation to indulge in ornament for its own sake which renders so much of Sanskrit literature inaccessible to younger students. The book may confidently be commended as a valuable aid for the study of Sanskrit.

The University of Edinburgh
2nd February, 1938. } **A. Berriedale Keith.**

# CONTENTS

॥ श्रीरस्तु ॥

# भासकथासारः ॥



## तृतीयो भागः ।



## वत्सराजचरितम्

(१)

कुलं वा शीलं वा विभवमथवा मानविशयं
जनस्य स्निग्धस्याप्यनुमतमनादृत्य सहसा ।
यदाज्ञां बाला अप्यनुविदधते निश्चितधियो
नमस्तस्मै सद्यःप्रभवदुपदेशाय गुरवे ॥

पुरा किल प्रकाशराजर्षिनामधेये भारते वंशे जातः निखिललोकोपगीतकीर्तिः मूर्तिमानिव जनसमुदयाभ्युदयः उदयनो नाम शतानीकपुत्रः प्रजावत्सलो वत्सराजः पृथिवीमशिषत् । तस्य च कौशाम्बी नाम प्रधाननगरी ।

२ स बाल्य एव प्रतापवत्तया शमितारातिदुरितो निराबाधां श्रियमनुभवन्, शनैर्यौगन्धरायणाद्येषु मन्त्रिमुख्येषु राज्यरक्षाधुरां विन्यस्य सुखेष्वेकान्ततत्परो बभूव। अनारतं स मृगयाव्यसनेन नागवनानि बभ्राम । तस्य च गान्धर्वपारदृश्वनः कुलोपलालितां घोषवतीं नाम कलनिर्ह्रादिनीं वीणां वादयतो दन्तिनः सुखेन वशमाययुः।

३ एवं क्रीडतस्तस्य प्रत्यन्तवर्ती प्रद्योतो नामोज्जयिनीभर्ता साम्मुख्येन समराक्षमामक्षौहिणीमाकलय्य छलेन ग्रहणमनुचिन्तयामास। इयेष चाभिलषणीयवरगुणाय दर्पादनाकाङ्क्षितसम्बन्धायाप्यस्मै प्रदातुं निरतिशयलावण्यशालिनीमात्मनो दुहितरं वासवदत्ताम्। तेन हि युक्त्या स कुवलयश्यामलं महान्तं यन्त्रहस्तिनं निर्माय, अमात्यशालङ्कायननेतृकं वीरपुरुषाधिष्ठितं तं मृगयालोलुपस्य वत्सराजस्य विहारोचिते विषयान्तगहने स्थापयामास।

४ अथ कदाचिदुदयनो नर्मदां तीर्त्वा, वेणुवने परिच्छदमवस्थाप्य, गजयूथविमर्दयोग्येन बलेन नागवनं प्राप्तः, मदयन्तीपर्वतमनासाद्यैव तटाकोत्थितं नागयूथं निध्यायन्, केनाप्युपस्थितेन पदातिना विज्ञापितोऽभूत् — "भर्तः! इतः क्रोशमात्रे मल्लिकासालप्रच्छादितशरीरो नखदन्तवर्जमेकनीलो हस्ती मया दृश्यते" इति । ततस्तं सुवर्णशतप्रदानेन परिपूज्योदयनः स्वानुचरान् प्रत्यभाषत—"अस्त्येष चक्रवर्ती हस्ती नीलकुवलयतनुर्नाम हस्तिशिक्षायां

पठितः । तदप्रमत्ता भवत यूयमस्मिन्यूथे । गजं तमहं वीणाद्वितीय आनयामि" इति ।

५ तदा तमुपरुध्य रुमण्वान्नाम मन्त्री विज्ञापयामास—"स्वामिन्, न खलु ते ऐरावणादीनामपि दिशागजानां ग्रहणं न सम्भावनीयम्। किन्तु आसन्नदोषाणि विषयान्तराणि ; यत्र रन्ध्रान्वेषी प्रत्यन्तनिवासी जनः। तन्नैकाकिना स्वामिना गन्तव्यम् । अहमप्यनुवर्ते" इति। उदयनस्त्वमात्यमात्मजीवितनिर्दिष्टेन शपथेन निवार्य, सुन्दरपाटलं नामाश्वमारुह्य, अनर्धोद्गते सूर्ये विंशत्यैव पदातिभिः सह प्रतस्थे ।

६ गतस्य च तस्य कश्चिदध्वानं सालवृक्षच्छायायां सावर्ण्यनष्टनीलतया प्रोद्भासमानाभ्यामशरीरविनिक्षिप्ताभ्यामिव दन्तमुकुलाभ्यां सूचितो धनुश्शतमात्रेणेव दृष्टिगोचरोभूत्स दिव्यवारणप्रतिच्छन्दः । ततस्तेनाश्वादवरुह्य देवतानां प्रणामं कृत्वा गृहीता वीणा । तदानीमतर्कितोत्पतनं समुत्पत्य तस्मात्कृतकहस्तिनः प्रद्योतभटास्तमभिदुद्रुवुः । तत्कूटं प्रद्योतप्रयोगमवगत्य शूरोऽभिमान्युदयनः सुन्दरपाटलमारुह्य, महता रोषेणाविष्टः खड्गमात्रसहायः प्रविवेश तत्परबलम् ।

७ ततः परिक्रीडमान इवैकाकी बहुषु प्रहरन्, अनुबद्धदिवसयुद्धपरिश्रान्तो गाढप्रहारजर्जरिताङ्गः स प्रतपत्सूर्यदारुणायां वेलायां मोहं गतः। नियन्त्रितोऽभूच्च शत्रुभिः प्राकृत इव सन्निहितगहनोत्पाटिताभिः कर्कशाभिर्वनलताभिः ।

८ अथ चिरात्प्रत्यागतसंज्ञमेनं पूर्ववैरमनुस्मृत्य पापनिश्चयानभिद्रवतः कांश्चिन्नृशंसान् सहसोपस्थितः प्रद्योतामात्यः शालङ्कायनो निवारयामास। ततः शरीरयन्त्रणात्स वत्सेशं मोचयित्वा सोपचारं सान्त्वनानि भणन्, गाढबहुप्रहारतया वाहनासनासमर्थ इति, स्कन्धवाह्यं शयनमारोप्योज्जयिनीं निनाय।

९ अतिस्नेहाद्वासवदत्तायां वरगुणेष्वतिमात्रलुब्धस्य महासेनस्य, वत्सराजप्रतीक्षयैव कन्यार्थिभ्यो गोत्रानुगुणेभ्यो राजकुलेभ्यो निश्चयवचनमभणित्वा कालं यापयतः, तद्ग्रहणवृत्तान्तश्रवणेन महत्स्वप्यभ्युदयेष्वननुभूतपूर्वा मुदश्चेतसि समभूवन्। अथास्य शासनेन विशिष्टेन सत्कारेण प्रवेशितो वत्सराजः कृतव्रणप्रतिकारः समुपचरितो राजपुरुषैः, आतपहितायां मणिभूमिकायां कल्पितनिवासोऽभूत्। सालङ्कायनप्रहितां समरावजितरत्नं वत्सराजस्य गजबन्धनलीलासखीं घोषवतीं तु प्रद्योतः वैताल्याः सकाशे अचिरोपक्रान्तवीणाशिक्षायै वासवदत्तायै दापयामास।

१० अत्रान्तरे कौशाम्ब्यां, "नीलहस्तिनमुपस्थाप्य प्रद्योतः स्वामिनं छलयितुकामः" इति चारमुखेनाधिगतप्रवृत्तिर्मेधावी यौगन्धरायणः, प्रागेव नागवनप्रवेशादुदयनस्य सलेखं पुरुषं विस्रष्टुं तत्वरे। त्वरमाणस्य चास्य समुपगाढ्ढंसको नाम भर्तुरुपस्थायकः सर्वमतिक्रान्तं वृत्तान्तमावेदयितुम्।

११ श्रुत्वा च स्वामिनो विपत्तिं नितरां विषण्णो निरुपाधिकस्वामिभक्तिपरायणो यौगन्धरायणः सकरुणमब्रवीत्— "हन्त!

भोः! छलिताः स्मः। महान्खलु भारः प्रद्योतेन भाग्यवशाल्लघु निस्तीर्णः। अद्यप्रभृति वत्सराजसचिवानां प्रतिष्ठितमसामर्थ्यमयशश्च। अहो! जाग्रतोऽपि बलवत्तरः कृतान्तः" इति। विललाप च पुनः स्वामिनोऽवस्थान्तरं चिन्तयित्वा— "कथं महाराजोऽपि प्राकृतैः प्रधर्षणं प्राप्तः। कथं तस्मिन्मणिवलयार्हे, चापास्फालनकर्कशपर्वणि, विप्राणामर्चयितरि, सुहृदां श्रमेष्वाश्लेषसत्कारप्रणयिनि, पीनांसे, भुजद्वये बन्धनं न्यस्तम्। कथमगणितपूर्वं द्रक्ष्यति प्रद्योतं स्वामी। कथं स नरलोकाभ्यर्चितशासनः श्रोष्यत्यनर्हपुरुषभाषितानि। कथं निरुद्धो वन्ध्यं धारयिष्यत्यरातिष्वमर्षम्। अद्य खलु नूनमस्य तिथिपूजनेषु देवताप्रणामकाले प्रचलिताः पटहस्थाने निगडाः स्वनन्ति। हा धिक्! भर्तृपिण्डस्यानिष्कृतिपरैः किमस्माभिरिह प्रयोजनम्" इति। भूयः सखेदं स हंसकमप्राक्षीत्— "अथ मामन्तरेण स्वामी न किञ्चिदाह" इति। हंसको न्यवेदयत्— "आर्य, अस्ति। बाष्पोपरुद्धकण्ठेन बहुकं सन्देष्टुकामेनेवास्मि भर्त्रोक्तः— 'गच्छ, यौगन्धरायणं प्रेक्षस्व' इति" इति।

१२ तदात्वे वत्सराजविपत्तिं श्रुत्वा सर्वमन्तःपुरं प्रचुक्षुभे। समादिशच्च प्रतीहारीमुखेन यौगन्धरायणं राजमाता— "यः खल्विदानीं सङ्कटेषु न विप्रतिपद्यसे, विषमगतो न विमुह्यसि, वञ्चितो न निर्वेदं गच्छसि, प्रतिघातेषु नावसीदसि, स खलु बुद्धिमांस्त्वमभ्यर्थ्यसे, यः प्रथममेव वत्सस्य वयस्यः पश्चादमात्यः, 'आनयतु पुत्रकं पुत्रकः' इति" इति।

१३ तदा भर्तृमातुः भर्तुश्च सर्वसचिवमण्डलमतिक्रम्य स्वस्मिन्नेतादृशीं प्रतिपत्तिमवेक्ष्य, यौगन्धरायणो जीवितप्रदानेनापि प्रत्यानेतुं स्वामिनं व्यवस्थितमतिः समाददे धीरमिमां प्रतिज्ञां – "मोचयामि न राजानं, नास्मि यौगन्धरायणः" इति।

१४ तत्क्षण एवोन्मत्तवेषेण प्राप्तः, भरतकुले धृतवात्सल्यो भगवान् द्वैपायनो राज्ञः शान्तिनिमित्तं भोजनोपनिमन्त्रितं ब्राह्मणजनमुद्दिश्य, "स्वैरं स्वैरमश्नन्तु भवन्तः। अभ्युदयः खल्वस्य राजकुलस्य भविष्यति" इत्युक्त्वा तिरोबभूव। तेन च परित्यक्तान् परिच्छदविशेषान् केनचिद्ब्राह्मणेनोपनीतान् यौगन्धरायणः प्रतिगृह्य, इदानीं मदुपदेशार्थमेवासौ भगवानागतः" इति निश्चिन्वानः पर्यधात्।

१५ एवमुन्मत्तवेषप्रच्छादितोऽसौ मन्त्रिमुख्यः, प्रतिज्ञया किञ्चिदिवाश्वासितां राजमातरमनुज्ञाप्य, श्रमणकवेषेण रुमण्वता, डिण्डिकच्छद्मभाजा राजवयस्येन वसन्तकेन चानुगम्यमान उज्जयिनीं प्राविशत्।

१६ तत्र च नीतिवित्स गूढपुरुषांस्तेषु तेषु प्रयोगौपयिकेषु करणीयेषु व्यापारयामास। वसन्तकस्तावद्विप्र इति राजकुले उपायनादिग्रहणव्याजेन लब्धप्रवेशो बन्धनस्थितेन चोदयनेन सह नवमिव मित्रभावमापन्नः तत्प्रार्थनया तत्र शश्वद्गमनागमनं कर्तुं प्रवृत्तः।

१७ अथैकदा कालाष्टम्यां धात्रीद्वितीया शिबिकामारुह्य वासवदत्ता बन्धनद्वारस्याग्रतो भगवत्या यक्षिण्याः स्थाने देवकार्यं कर्तुं गता आसीत् । तस्मिन्दिवसे यदृच्छया बन्धनपरिरक्षकमनुमान्य बन्धनगृहद्वारे निष्क्रान्त उदयनः, पुरुषस्कन्धपरिवर्तनावस्थितायां शिबिकायां, राजदारिकां प्रकाममालोकयामास । सापि सुन्दाराङ्गं तं दृष्ट्वा चेतसि रागं बबन्ध ।

१८ एवं स्थिते प्रद्योतः, येन स्वस्मिन्नर्थिभावं प्रपन्नः प्रह्वीभवेद्वत्सराजः तादृशमस्य स्वदुहितरि प्रेम समासञ्जयितुकामः, चिरोद्दिष्टाय वराय तस्मै वासवदत्तां— "गान्धर्वमेनां शिक्षय" इति शिष्याव्यपदेशेनानग्निसाक्षिकं प्रादात् । एवमव्याजदर्शितानुकूल्यो दैवेन वत्सराजः तदाप्रभृति विपक्षग्रहणपरिभवमनाकलय्य बन्धनमपि प्रमदवनं संभाव्य तुल्यानुरागया राजपुत्र्या सह प्रवृत्तो रागलीलां कर्तुम् । इयेष च निजबन्धनावमानस्य प्रतिक्रियामन्विष्यन्, उपारूढेन प्रेम्णा तातपक्षपराङ्मुखीं प्रद्योतदुहितरमपहर्तुम् । वसन्तकमुखेनापि संदिदेश यौगन्धरायणाय "मन्मनोरथानुगुण्येनैव निर्गमनोपायस्य समर्थनं मह्यं रोचते । समाने गमने प्रद्योतस्यावमानविशेषश्चिन्त्यते । मा कामप्रधान इति मामवमन्यस्व" इति ।

१९ अथ सङ्केतानुरोधेन नगराद्बहिर्जनसम्पातवर्त्मनो दवीयसि क्वचिज्जीर्णे देवकुले स्वामिनश्चापलमन्तरेण रुमण्वद्यौगन्धरायणौ

विदितार्थौ कर्तुं तयोरागमनं डिण्डिकवेषो वसन्तकः प्रतिपालयन्, अपहृतमिवात्मनो मोदकमल्लकमन्विष्यन् सुहृदभिज्ञानहेतोर्गूढार्थां कामप्युद्घोषणां प्रस्तुवन्नास्त। तदभिज्ञायोन्मत्तवेषच्छन्नो यौगन्धरायणः प्राविशत्। तयोश्च मोदकमल्लकानुसारिणा वाक्कलहेन परस्परमसूच्यन्त तत्तन्नयारम्भविशेषाः। उभयोरुच्चैराक्रोशशब्देन श्रमणकच्छद्मा रुमण्वानपि तत्रानीयत।

२० एवं व्याजेन मिलितास्ते निर्मक्षिकमन्तर्गृहं प्रविष्टा विस्रम्भेण मिथः कथयितुमारभन्त। तदा यौगन्धरायणः स्वामिनोऽपवाहनार्थं समनन्तरदिन एव प्रयोजयिष्यमाणानि संविधानान्युपवर्णयामास। "श्वः किल स्वामिनो निर्गमनं साधयिष्यते। तत्र च वसन्तकेन स्वामी प्रतिबोधयितव्यः। नैकविधैर्मन्त्रौषधिप्रयोगैः व्यामोहितो महासेनहस्ती नळागिरिः शालासन्निकृष्टगृहोद्दीपनेन त्रासयित्वा धूपैः प्रतिगजमदैः शङ्खदुन्दुभिस्वनैश्च सहसोन्मादयिष्यते। प्रमत्ते च तस्मिन्दुर्नियन्त्रणे समन्तात् संक्षोभयत्युज्जयिनीं, निश्शरणः प्रद्योतः समुद्विग्नैः परिवारैः परिगतः स्वामिनमेव शरणमुपयास्यति। तेन च नळागिरिग्रहणार्थं बन्धनाद्विमुक्तः स्वामी घोषवतीं वादयन् तं मत्तवारणं स्वाधीनतामुपनीय तस्मिन्व्यवस्थितासनः जवेन निष्क्रमिष्यति।" इति।

२१ तदा, 'सिद्धप्रायमस्मत्परिश्रमफल'मिति मन्यमानाय यौगन्धरायणाय वसन्तकः काममोहितं वासवदत्तानुगमनादृते बन्धमोक्षमप्यबहुमन्यमानं राजानं न्यवेदयत्। सर्वारम्भविघ्नकरमिमं

निरपत्रपस्य स्वामिनो बन्धनागारेऽनुपस्थितदेशकालं रागानुबन्धं श्रुत्वा खिन्नोऽपि धीमान् भक्तिमांश्चासावमात्यवर्यः, "सवासवदत्तः स्वामी वा मोचयितव्यः, अनेनैव वेषेण जरा वा गन्तव्या" इति द्वितीयां प्रतिज्ञामङ्गीकृत्य, राज्ञो मनोरथानुरूपं निष्क्रमणं साधयितुमुपायमन्विवेष। अथावधृतानन्तरकरणीयानामेषां सङ्घातो विभिदे।

२२ ततः सङ्कल्पितेन विधिना उन्मादिते नडागिरौ अशिक्षितदुर्निग्रहे नगरीमुद्भ्रमति, सुहृदां स्वस्य च जीवितसंशयमापतितमुद्वीक्ष्य संभ्रान्तो महासेन उदयनं विमोचयामास। तेन च घोषवतीद्वितीयेन प्रशान्तवेगः कृतो वारणः। दुहितुरयं प्रणयीति स्वस्य च जीवितप्रदायीति कृत्वा महासेनो न पुनर्वत्सराजं निगडयामास। एवं स्थिते वासवदत्तापनयनानुकूल्याय तस्या एव हस्तिन्या भद्रवत्या निष्क्रमणं निर्वर्तनीयमिति निश्चितवतो यौगन्धरायणस्य निदेशवर्तिना तस्यैव चारपुरुषेण गात्रसेवकनाम्ना हस्तिपकेन सन्निधापितां भद्रवतीमारुह्य सवासवदत्तो वत्सराजः यौगन्धरायणोद्दिष्टेऽहनि अजाग्रत्सु प्रद्योतभटेषु निभृतं निष्क्रान्तः निमिषमात्रातिलङ्घितबहुयोजनः एकाह्नैव नगराद्विन्ध्यवनं वनात्कौशाम्बीं चोपजगाम।

२३ अत्रान्तरे, पानमत्तमिवाहिण्डमानं गात्रसेवकं, "वासवदत्तायाः जलविहारार्थं भद्रवतीमुपस्थापय" इत्यनुरुन्धानः कश्चिद्भटः यावत्तं प्रतिबोधयितुं नापारयत, तावत्, "एष खलु वत्सराजः वासवदत्तां गृहीत्वा निर्गतः" इति महान्तं नगरशब्दमश्रृणोत्।

अवागच्छदपि क्रमेण गात्रसेवकं यौगन्धरायणस्यैव गूढपुरुषम् । ततः किन्तु खल्वेतदिति विस्मयमाने तस्मिन् प्रावर्तत महद्युद्धं, ससंभ्रमं वत्सराजपदवीमनुपततां प्रद्योतसैन्यानां निजनिजस्थानेभ्यो निष्पतितानां च निरोधमुक्तानामिव कृष्णसर्पाणां यौगन्धरायणपुरुषाणाम् । तदानीं सुदूरमपवाहितवत्सराजो यौगन्धरायणः परिहृत्योन्मत्तवेषमसिद्वितीयः प्रद्योताक्षौहिणीं विगाह्य विहरन् मुहूर्तं तस्या नासीररयं निरुरोध। किन्तु प्रतिपक्षहस्तिनो दन्तावघट्टनेन मध्ये विपन्नासिः तदात्वेऽप्यनिवृत्तपदः धुरि प्रयुद्ध्यमानोऽसौ ग्रहणमुपगतः। सर्वमेतन्निशाम्य स भटः "प्राकारतोरणवर्जं कथमियं नगरी कौशाम्ब्येव संवृत्ता" इति विस्मयमानो गत्वा अमात्याय भरतरोहकाय वृत्तान्तं निवेदयामास ।

२४ अथ वत्सराजमानीय निस्तीर्णप्रतिज्ञाभारस्य भर्तृपिण्डानृण्यं गतस्य, फलानुमितैः प्रतिपक्षामात्यमतिविभ्रमहेतुभिस्तैस्तैर्नयप्रयोगैश्च विस्मापितजगतः, यौगन्धरायणस्य, तदानीं शस्त्रदोषाद्रणे ग्रहणमपि श्लाघनीयमासीत्। रमणीयतरः खलु प्राप्तमनोरथानां विनिपातः । तदा, बद्ध्वा नीयमानमेनं पूर्वमुन्मत्तवेषेण रथ्यासु दृष्टपरिधावनं परिणतौ तु विभाव्यमानमाहात्म्यमाश्चर्यकृतसम्मर्दाः दर्शनाभिलाषिणः पौराः परिवव्रुः। ततो नीतोऽसावायुधागारममात्यनिदेशेन पुरुषगुप्ते देशेऽत्रस्थापितः सोपहासमचिन्तयत्— "अहो प्रद्योतमन्त्रिणामकाले जागरणम् ।

अग्निं वद्ध्वा वत्सराजाभिधानं
यस्मिन्काले सर्वतो रक्षितव्यम्।
तस्मिन्काले सुप्तमासीदमात्यैः
नीते रत्ने भाजने को निरोधः॥" इति॥

२५ अस्य च नीतिगहने प्रमुग्धो भरतरोहकः, नडागिरिणा यद्यपि ग्रहीतुं शक्या भद्रवती, वत्सराजं मुक्त्वा नापरस्तं वाहयितुं समर्थ इति अनुसारे निराशो भूत्वा, बन्धनापन्नं यौगन्धरायणमुपगम्य, "छलेनापवाहितवत्सराजस्य ते कियत्यात्मसम्भावना? अपि च महासेनस्य प्रतिकूलं कृत्वा कौशाम्बीगतोऽपि स किं स्वस्थो भविष्यति" इत्यवाभर्त्सयत। तदा सोपहासं प्रत्यवादीद्यौगन्धरायणः, "किं न प्रस्तुता भवता पूर्वं सालवृक्षोपरचितनागाश्रिता वञ्चना? युक्तमेव हि कृतं मया वारणनिग्रहाश्रितां वञ्चनां प्रतिकल्पयता। यत्तु कौशाम्बीगतं वत्सराजं प्रति विभीषिकाभिधीयते, तत्परिहास्यं भवति। भवतामग्रत एव स नन्वपवाहितः। स्वदेशे तस्य रक्षणं किन्नु दुष्करम्। समूलं वृक्षमुत्पाट्य शाखाश्छेत्तुं कुतः श्रमः" इति।

२६ तस्य सावष्टम्भगम्भीरोपहासचतुरमात्मनो नीतिविवरणमवधार्य विस्मितो भरतरोहकः पुनः साक्षेपमाह। "शिष्येति प्रतिगृहीतायाः महासेनदुहितुर्यदत्तापनयनं कृतं युक्तेयं भोः तस्करप्रवृत्तिः" इति। तमित्थं समादधे यौगन्धरायणः। "मा मा भवानेवम्। विवाहः खल्वेष स्वामिनः।

भारतानां कुले जातो, वत्सानामूर्जितः पतिः ।
अकृत्वा दारनिर्देशमुपदेशं करिष्यति ॥" इति ॥

२७ अतः परं निरुत्तरो भरतरोहकः तस्य स्वामिभक्त्या नयप्रागल्भ्येन च तस्मिन्नुपारूढबहुमानः, तेन पारितोषिकं भृङ्गारं प्रतिग्राहयामास ।

२८ अथ तस्मिन्नवसरे वासवदत्तापहरणपरिभवेन शोकाभिभूतहृदया महासेनमहिष्यङ्गारवती प्रासादाच्छरीरं मोक्तुकामेति महान् हाहाकारः समुदभूत् । तां च प्रद्योतः कृच्छ्रेण पर्यवस्थापयामास—"क्षत्रधर्मेणानवद्यस्ते दुहितुर्विवाहः । सर्वथैव च नोऽभिमतोऽयं वरः । किमिदानीं हर्षकाले सन्तप्यसे" इति ।

२९ ततस्तस्याः परितोषाय विमोचितं यौगन्धरायणं पुरस्कृत्य चित्रालिखितयोर्वासवदत्तावत्सराजयोः परिणयविधिं निर्वर्तयामास । अनन्तरं यौगन्धरायणः सत्कृत्य तेन विसर्जितः कौशाम्बीमाययौ ।

(२)

प्रकृत्यैव सचिवायत्तसिद्धिर्वत्सराजो वासवदत्तालाभात्परं भोगेष्वेकान्तमासक्तमना मान्मथेष्वेव रसक्रमेष्ववगाढः अनान्तःपुरिकं कमपि वृत्तान्तं न चेतयामास । एवमजिगीषोः सततमनुद्यतस्य चास्य राष्ट्रमण्डलं छिद्रान्वेषिणा आरुणिनाम्ना विपक्षेण शनैराक्रम्य

प्रक्षीणतासनायि । तादृशस्य व्यसनिनो राज्ञः सचिवभावेन स्वस्मिन्नायत्तप्रजापालनविधिः खिन्नो यौगन्धरायणः सेनापतिना रुमण्वता सह मन्त्रयामास । "स्त्रीमद्यमृगयातत्परस्य निश्चिन्तं तिष्ठतः स्वामिनोऽद्य परिशिष्टं कौशाम्बीमात्रमपि राज्यं किं न रन्ध्रप्रहारिभिः परिपन्थिभिरपह्रियेत । यत्सत्यं नीतिपराङ्मुखस्य राज्ञोऽर्थसिद्धिः सचिवायत्ता । तदावाभ्यां यथाऽसौ क्रमागतं समग्रं राज्यं प्रतिपद्येत तथा प्रयतितव्यम्" इति । तदर्थं च, सहायबलसाध्यत्वात् पृथिवीजयस्य, मगधराजस्य बलिनो दर्शकस्य मित्रभावं सम्पादयिष्यन्, आदेशिकै राज्ञो देवी भवित्रीत्यादिष्टां तद्भगिनीं पद्मावतीं कथञ्चित्स्वामिने घटयितुं निश्चिकाय ।

२ "ध्रियमाणायां वासवदत्तायामुदयनो नान्यां परिणेष्यति दर्शकोऽपि न पद्मावतीं दास्यति" समर्थ्यासौ इति धिषणोपहसितधिषणो वत्सेश्वरामात्यो देवीं छन्नमपवाहयितुं कञ्चिदुपायमन्वियेष । तथा च, कदाचिल्लावाणकमावासिते राजनि मृगयानिष्क्रान्ते देवीवासगृहमादीप्य, "हा, हा, वासवदत्ता ग्रामदाहेन दग्धा । यौगन्धरायणोऽपि तामभ्यवपत्तुकामस्तत्रैव पतितः" इति रुमण्वन्मुखेन व्याघोषयामास । वासवदत्तां तु तत्तदुक्तिभिः स्वनीतिसिद्धौ साहाय्येऽभ्यर्थ्यानुमान्य च यौगन्धरायणो मगधदेशं निनाय ।

३ तत्र च परिव्राजकलिङ्गोऽसावावन्तिकाव्यपदेशया तया सह किञ्चिदाश्रमपदमुपाजगाम । तदानीमाश्रमस्थां राजमातरमभिवादयितुं तत्रैवागतां दर्शकस्य भगिनीं पद्मावतीं तौ ददृशतुः । तां भर्तृ-

दारत्वेनाभिलषतो यौगन्धरायणस्य, "प्रद्योतेन दारकस्य कारणादियमभ्यर्थ्यते" इति चेटीजनेन तापस्यै निवेदितामेनां शृण्वत्या वासवदत्तायाश्च, तस्याम् अभिजनानुरूपेण रूपेण रूपानुगुणया गुणसम्पदा च विशेषिता स्वकीयेति महती प्रीतिरुदपद्यत ।

४ अथ कृतगुरुजनवन्दना धर्मरतिर्मगधराजपुत्री मुनिजनाभीष्टपूरणेनात्मानुग्रहमिच्छन्ती कञ्चुकिमुखेन, "कस्याद्य किं दीयताम्" इति व्याघोषयामास । तं क्षणमुपलभ्य यौगन्धरायणः समुपगम्यायाचत— "भोः अहमर्थी । प्रोषितभर्तृकामिमां मम स्वसारमिच्छाम्यत्रभवत्या कञ्चित्कालं परिपाल्यमानाम् । इष्टधर्मप्रचारेयं धीरा राजदारिका मद्भगिन्याश्चारित्रं रक्षिष्यति" इति । दुःखं न्यासस्य रक्षणमिति विदत्यपि सत्यवादिनी पद्मावती प्रथममुद्घोष्य न पुनर्विचारयितुं युक्तमिति तदभ्यर्थनामङ्गीचकार । विभाव्य च वासवदत्तां, "यदीदृश्यस्या आकृतिर्नूनमियमभिजनवती" इति निश्चित्य सा राजपुत्री तस्यां सविशेषां बहुमतिमादधे ।

५ यौगन्धरायणोऽपि, "अर्धमवसितं कार्यस्य । यथा मन्त्रिभिः सह समर्थितं दिष्ट्या तथैव परिणतम् । प्रतिष्ठिते च स्वामिनि वासवदत्तामुपनयतो मे पद्मावती विश्वासस्थानं भविष्यति या सिद्धैरादिष्टा नरपतेर्महिषी भवित्रीति । सुपरीक्षितमेवैतत्, यत्किल सिद्धवाक्यान्युत्क्रम्य न गच्छति विधिः" इति सोच्छ्वासं चिन्तयन् सर्वाननुज्ञाप्य ततो निर्जगाम ।

६ अथ लावाणके मृगयानिवृत्तो वत्सराजः मन्त्रिभ्यो देवीदाहं श्रुत्वा अशनिहत इव भूमौ निपत्य, "हा वासवदत्ते ! हा अवन्तिराजपुत्रि ! हा प्रिये ! हा प्रियशिष्ये !" इति बहु विलपन्, तस्याः शरीरोपभुक्तानि दग्धशेषाण्याभरणानि परिष्वज्य मोहमुपगतः । प्रबुद्धश्च तस्मिन्नेवाग्नौ प्राणान्परित्यक्तुमयतत । ततो महता यत्नेन मन्त्रिभिर्निवारितः वासवदत्तागतयैव चिन्तया "इह तया सह हसितम्, इह तया सह कथितम्, इह तया सहोषितम्, इह तया सह कुपितम्," इत्येवं विलपन् सर्वावस्थास्वपि निरन्तरमनुवर्तमानेन रुमण्वता कृच्छ्रेण पर्यवस्थाप्यमानः विरहानलोष्मदुस्सहान् प्रस्थितान् प्राणान् कथञ्चिद्धारयंस्तस्थौ । तादृशस्य तस्य लावाणकावस्थितिरनुकलं वासवदत्तां स्मारयित्वा विरहानलं सन्धुक्षयतीति कृत्वा, हृदयविनोदार्थं तममात्यास्तस्माद्ग्रामादपवाहयामासुः । समानयन्नपि तं यौगन्धरायणमन्त्रमनुतिष्ठन्तस्ते दर्शकस्य विषयान् मगधान् ।

७ एवमन्यप्रयोजनेनागतस्योदयनस्याभिजनविज्ञानवयोरूपादिकं दृष्ट्वा कालज्ञो दर्शकः स्वभगिनीं तस्मै प्रतिपिपादयिषुरर्थयामास । पद्मावत्यपि कृतदूतसंपातेन प्रद्योतसुतेन सम्बन्धमनिच्छन्ती, मृतामपि प्रियामनुस्मृत्य दारुणां वियोगदशामनुभवन्तं, सानुक्रोश इत्युदयनमेव भर्तारं मनसा चकाङ्क्ष । अमात्यानां निर्बन्धवशाद्वत्सेशो दर्शकसम्बन्धमनुमेने । अथासन्नविवाहः स दर्शकगृहानुपागमत् । तत्र च निजविभवोचितं दर्शकेनाभ्यर्चितः पद्मावत्याः पाणिं जग्राह ।

८ अथ तस्मिन्नेव राजकुले निवसन्त्याः निजगुणैः पद्मावत्याः परं बहुमतिपदमारूढायाः, आवन्तिकाव्यपदेशाया वासवदत्तायाः, भर्तुः पुनर्विवाह इति महान् हृदयज्वरोऽवर्तत। "अहो, आर्यपुत्रोऽपि नाम परकीयः संवृत्तः" इति सा दूयमाना शश्वदुत्ताम्यति स्म। विह्वलहृदयायास्तस्या बहुषु वाक्प्रमादेषु आत्मनः स्वरूपं कृच्छ्रगोप्यमासीत्। निरुत्साहा च सा विवाहामोदसंकुलमन्तःपुरं परित्यज्य विजने संविष्टा स्वस्य भागधेयमनुचिन्त्याखिद्यत। तस्याः शोकेनान्धीबभूव हृदयम्। अमण्डितशरीरा नीहारप्रतिहतेव चन्द्रलेखा शोच्यदर्शनतामावहत्। निद्रामलभमानायास्तस्याः शय्यायामपि दुःखविनोदनमसम्भावनीयमासीत्। केवलमार्यपुत्रदिदृक्षया विरहनिपीडितानपि प्राणान्दधार।

२ अत्रान्तरे वत्सराजो द्वित्रदिनानि प्रवृत्तनृत्तगीतं प्रमोदमेदुरमुद्वाहमहोत्सवमनुभवन् नवपरिचयहारिण्या पद्मावत्या सहचरितो यथासुखं श्वशुरगृह उवास। परं तु बहुगुणकमनीयापि पद्मावती तेन वासवदत्तां विस्मारयितुं न पारयामास। स तु दक्षिणतया अग्रतः पद्मावतीं रञ्जयन्नपि लब्धैकान्त्यः सख्या वसन्तकेन सह वासवदत्ताविरहपर्युत्सुकेन मनसा तद्गुणानेव वर्णयन्नास्त। एकदा अलक्षितागते पद्मावती वासवदत्ता च उपवने तादृशं स्वैरमनयोरालापमुपशुश्रुवतुः। तदा विदूषकोऽपृच्छत्— "भोः, शून्यं खल्विदं प्रमदवनम्। पृच्छामि भवन्तं किमपि प्रष्टव्यम्। का भवतः प्रिया; तदानीं तत्रभवती वासवदत्ता, इदानीं पद्मावती वा" इति। अनेन प्रश्नेन

बहुमानसङ्कटे पातितः स्वभावदक्षिणो राजा न प्रतिवक्तुं शशाक। किंतु वयस्येन सशपथं बलात्कारेण पृष्टः उदैरयत्— "का गतिः श्रूयताम्—

पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।
वासवदत्ताबद्धं न तु तावन्मे मनो हरति॥" इति।

१० तच्छ्रुत्वा अभिजाता पद्मावती अनसूयन्ती, "सदाक्षिण्यो भर्ता" इति तस्मिन्नधिकतरं पिप्रिये। पत्युरभ्युदयापेक्षया अङ्गीकृत-विरहदुःखा वासवदत्ता स्थानपेतं भर्तुर्हृदयमालक्ष्य दत्तवेतनेव परिखेदस्य समाश्वसत्।

११ अनेन परिहासेन स्मृतवासवदत्तावृत्तान्तस्य नवमिव विरह-दुःखमनुभवतो राज्ञो नयनं बाष्पायमाणमभवत। तदा "उत्कण्ठितं भर्तारमवेक्षस्व" इति पद्मावतीमुक्त्वा वासवदत्ता निरगच्छत्। पद्मावत्यपि विदूषकेण नलिनीपत्रेणानीयमानं मुखोदकं तस्य हस्तात् स्वयं गृहीत्वा राजानमुपासरत्। तामुपस्थितां दृष्ट्वा संभ्रान्तो राजा दक्षिणत्वात्—

"इयं बाला नवोद्वाहा सत्यं श्रुत्वा व्यथां व्रजेत्।
कामं धीरस्वभावेयं स्त्रीस्वभावस्तु कातरः॥" इति

समर्थयन् अश्रुकारणमित्थं व्याचख्यौ।

"शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम॥" इति।

१२ पद्मावती तु तस्य दाक्षिण्येन तुतोष । ततो जामातरमग्रतः कृत्वा मगधराजस्य सुहृज्जनं द्रष्टुं योग्यः अपराह्णकालः समुपस्थित इति पद्मावतीमापृच्छ्य सवयस्यो वत्सराजो राजसभामभिप्रतस्थे ।

१३ अथान्येद्युर्निशायां शीर्षवेदनया दुःखिता पद्मावतीति तस्याः समुद्रगृहके शयनीयं रचितमासीत् । तत्र तां वेदनायाः सह्यतां प्रष्टुं सवसन्तको राजा गतः । गत्वा च अव्याकुलप्रच्छदामक्लिष्टोपधानामास्तृतसमां शय्यामालोक्य न तावदागता पद्मावतीत्यनुमिमानो राजा मुहूर्तं प्रतिपालयामीति तामेव शय्यामधिशिश्ये । शयानश्च निद्राहेतोरुज्जयिनीसम्बद्धां कामपि कथामुपक्रममाणे वयस्ये, हुतवहोपहारीभूतामवन्तिराजतनयामनुस्मरन् विरहातुरः सशोकमित्थं विललाप ।

"स्मराम्यवन्त्याधिपतेः सुतायाः
प्रस्थानकाले स्वजनं स्मरन्त्याः ।
बाष्पं प्रवृद्धं नयनान्तलग्नं
स्नेहान्ममैवोरसि पातयन्त्याः ॥

अपि च—

बहुशोऽप्युपदेशेषु तया मामीक्षमाणया ।
हस्तेन स्रस्तकोणेन कृतमाकाशवादितम् ॥" इति ।

१४ अनेन व्याक्षेपेणावघट्टितशोकशल्यं राजानं प्रेक्ष्य विदूषकोऽन्यां कथां कथयितुमारेभे । कथयति चास्मिन् शनैरुदयनो

निद्रापरवशो बभूव । सुप्तं तमवगत्य, "अतिशीतलेयं वेला, प्रावारकं गृहीत्वा आगमिष्यामि" इति विदूषकोऽपि निर्गतः ।

१५ क्षणेन, अस्वस्थां पद्मावतीं कथाभिर्विनोदयितुमाकारिता अवन्तिका समुद्रगृहकं प्रविश्य मन्दया दीपप्रभया सुप्तं राजानं पद्मावतीं मत्वा शयनसंविभाग उपविश्य सस्नेहं परामृशन्ती परिषस्वजे । तदा राजा उत्स्वप्नायते स्म– "हा वासवदत्ते, हा प्रिये, हा प्रियशिष्ये ! देहि मे प्रतिवचनम्" इति । तच्छ्रुत्वा "आर्यपुत्रः खलु, न तावत्पद्मावती" इत्यवधार्य वासवदत्ता सरभसमुदतिष्ठत् । आशशङ्के च नितान्तचकिता सा साध्वी– "किं नु खलु दृष्टास्मि । महान्स्वल्वार्ययौगन्धरायणस्य प्रतिज्ञाभारो मम दर्शनेन निष्फलः संवृत्तः" इति । पुनस्तद्वदेव विलपन्तं समीक्ष्य च समाश्वसत्, "दिष्ट्या स्वप्नायते खल्वार्यपुत्रः" इति । ततः "नात्र कोऽपि जनः । यावन्मुहूर्तं स्थित्वा दृष्टिं हृदयं च तोषयामि" इति सकरुणस्नेहं भर्तारं निध्यायन्ती तत्र क्षणमवतस्थे । अथ भूयोऽप्युत्स्वप्नायमानो राजा कुपितामिव प्रियां प्रसादयन् हस्तौ प्रसारयामास । यौगन्धरायणमननुज्ञाप्य स्वप्रकाशनमनिच्छन्ती सा साध्वी– "चिरं स्थितास्मि । कोऽपि मां पश्येत् । तद्गमिष्यामि" इति मत्वा प्रतिष्ठमाना शय्यावलम्बितं राज्ञो हस्तं शयनीय आरोप्य सत्वरं निरगात् ।

१४ अथ स्पर्शविशेषेण प्रबुद्धो राजा सहसोत्थाय "वासवदत्ते, तिष्ठ, तिष्ठ" इत्यनुधावन् सम्भ्रमवशात् द्वारपक्षेण ताडितो

व्यषीदत्। तदानीं व्यामुग्धः स प्रियादर्शनं स्वप्नं वा भ्रमं वा भूतार्थं वा न परिच्छेत्तुं शशाक। उपसृत्य च वसन्तकस्तं, "असम्भावनीयमेतत्; चिरात्खलूपरता वासवदत्ता। सन्ततं तामेव चिन्तयतस्तव स्वप्नविभ्रमोऽयं भवेत्। अथवा अस्मिन्राजकुले अवन्तिसुन्दरी नाम यक्षिणी प्रतिवसति; सा त्वया दृष्टा भवेत्।" इत्युपजहास। तं प्रत्याययन्नाह हर्षविषादविह्वलान्तरङ्गो राजा— "न न,

स्वप्नस्यान्ते विबुद्धेन नेत्रविप्रोषिताञ्जनम्।
चारित्रमपि रक्षन्त्या दृष्टं दीर्घालकं मुखम् ॥

अपि च, वयस्य, पश्य पश्य—

योऽयं सन्त्रस्तया देव्या तया बाहुर्निपीडितः।
स्वप्नेऽप्युत्पन्नसंस्पर्शो रोमहर्षं न मुञ्चति ॥" इति ॥

१७ अथ च यथा यथा चिन्तयति स्म तथा तथा दृढतरं स वासवदत्तां ध्रियमाणामज्ञासीत्। कदाचित्सा प्रकाशमेष्यतीति मनोरथमुल्लिलेख च।

१८ ततो निर्वृत्ते विवाहमङ्गले, सपरिवार उदयनः अवन्तिकामुखसखीजनानुगतया पद्मावत्या सह पर्युत्सुकप्रकृतिमण्डलाभिनन्दितागमनः स्वराजधानीं प्रतिनिववृते। अत्रान्तरे रुमण्वान् दर्शकसाहाय्येन समाहृतं महद्बलमाकर्षन्नारुणिमभिमुखीभूयाभिहत्य च सङ्गरे, तदपहृतं वत्सराजं राज्ञे प्रत्यानिनाय।

१९ राज्यलाभप्रवृद्धोदयोऽप्युदयनः कदाचित्, "नर्मदातीरे गुल्मलग्ना दृष्टा" इत्युपनीतायाः वासवदत्ताङ्कोपलालिताया घोषवत्या दर्शनेन प्रतिबोधितविरहव्यथः, "तां तु देवीं न पश्यामि यस्या घोषवती प्रिया" इति विलपन् नितरामतप्यत।

२० एवं गते, महासेनः उपरतां दुहितरं तद्विरहेण दुःखितं जामातरं च श्रुत्वा तस्योत्कण्ठाविनोदार्थं, यत्र चित्रफलके पूर्वं वासवदत्तामालिख्य विवाहो निर्वर्तितः तं वासवदत्ताधात्र्या हस्ते समर्प्य सकाञ्चुकीयां तां प्रेषयामास। धात्रीकाञ्चुकीयौ वत्सराजः सबहुमानं महासेनस्य देव्या अङ्गारवत्याश्च कुशलमन्वयुङ्क्त। काञ्चुकीयः सर्वगतं कुशलं निवेद्य परापहृतस्य राज्यस्य प्रत्यानयनेन वर्धमानं महासेनवचसा उदयनमभिनन्दयामास। धात्री चाङ्गारवत्याः प्रेमानुशयकरम्बितं सन्देशमचकथत्।

२१ तदा महासेनाङ्गारवत्योः कन्यापहारिणि स्वस्मिन् तस्यामप्युपरतायामनिवृत्तां स्वीयत्वसम्भावनां निरीक्ष्य शोकानुतापलक्ष्यहृदयो वत्सराजस्तां परिणतिमनुचिन्त्य वैक्लव्यमगमत्। तं पर्यवस्थापयन्नाह काञ्चुकीयः— "उपरताप्यनुपरता महासेनपुत्री एवमनुकम्प्यमाना भर्त्रा।

अथवा—

कः कं शक्तो रक्षितुं मृत्युकाले
रज्जुच्छेदे के घटं धारयन्ति।

एवं लोकस्तुल्यधर्मा वनानां
काले काले छिद्यते रुह्यते च ।।" इति ।।

२२ तदानीं तस्य चित्तविनोदनार्थमुपप्रेषितम् आलिखितवासवदत्ताप्रतिच्छन्दं चित्रफलकं तस्मै धात्री उपानयत् । तत्सबहुमानं राज्ञा सह निर्वर्णयन्ती पद्मावती प्रहृष्टोद्विग्ना सप्रत्यभिज्ञमाह– "आर्यपुत्र, अस्याः प्रतिकृत्याः सदृशीह प्रतिवसति । या किल मम कन्याभावे केनापि ब्राह्मणेन स्वभगिनिकेति न्यासतया निक्षिप्ता" इति । तदा, "किमियं वासवदत्ता भवेत् उत विप्रस्य भगिन्येव । यदि विप्रस्य भगिनी व्यक्तमन्या भविष्यति । अथवा दृश्यते खलु परस्परगतं रूपसादृश्यं लोके ।" इति विचिकित्सति राजनि, यौगन्धरायणो यवनिकान्तरित उपसद्य न्यासप्रत्यर्पणं पद्मावत्या अयाचत । राजा चावन्तिकामानाययामास ।

२३ ततः परकलत्रदर्शनं परिहरन् उदयनः साक्षिमान् न्यासो निर्यातयितव्य इति वासवदत्ताधात्रीं काञ्चुकीयं च तत्राधिकरणं कल्पयामास । धात्री त्ववन्तिकां निर्वर्ण्य "अहो भर्तृदारिका वासवदत्ता" इति साश्चर्यमाचक्रन्द । तदा सम्भ्रान्तो राजा "कथं महासेनपुत्री । तत्प्रविशत्वभ्यन्तरम्" इत्याजिज्ञपत् । यौगन्धरायणस्तु "न खलु न खलु प्रवेष्टव्यम् । मम भगिनी खल्वेषा । भो राजन्–

भारतानां कुले जातो विनीतो ज्ञानवाञ्छुचिः ।
तन्नार्हसि बलाद्धर्तुं राजधर्मस्य देशिकः ।।" इत्याचिक्षेप ।

20059

२४ "भवतु, पश्यामस्तावद्रूपसादृश्यम्" इति वदन् राजा यदा यवनिकां संक्षेपयामास तदा यौगन्धरायणो वासवदत्ता चोपसृत्य राज्ञे जयमुदीरयामासतुः । तौ च पश्यन्नुदयनः किन्नु सत्यमिदमुत स्वप्न इति विस्मयमानः परिषस्वजे ।

२५ ततो यौगन्धरायणस्तस्य पादमूले पतित्वा "स्वामिन्, देव्यपनयनेन कृतापराधः क्षम्यतामयं जनः" इति प्रार्थयामास । तमुत्थाप्य प्रहृष्टो वत्सराजः सप्रेमाश्रु सगद्गदमिदमुदैरयत्–

"मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः ।
भवद्यत्नैः किल वयं मज्जमानाः समुद्धृताः ॥" इति ।

२६ पद्मावत्यपि सखीजनसमुदाचारेण दूषितां वासवदत्तां शीर्षेण प्रसादयामास ।

२७ अथ यौगन्धरायणः स्वनीतिप्रयोगमान्तं राज्ञः स्पष्टीचकार । स्वयमेवैतत्कुशलं महासेनाय निवेदयितुं सधात्रीकाञ्चुकीयो राजा उज्जयिनीं ययौ । एवं सर्वकार्यधुरन्धरेण यौगन्धरायणेन प्रत्यवेक्षितयोगक्षेमो वत्सराजः वासवदत्तापद्मावतीभ्यां सह यथामनोरथं रममाणः सुचिरं मुमुदे ।

—

# अथ अविमारकचरितम् ।

वैरन्त्यनगरेशितुः सुयोधनात्मजस्य राज्ञः कुन्तिभोजस्य निरवद्यपेशलाङ्गी कुरङ्गी नाम समग्रैर्निजरूपगुणैरसमाना भासमाना दुहिता समास्त । बहवस्तां स्वसुतनयनिमित्तमर्थयमाना राजानः कुन्तिभोजाय दूतसंप्रेषणमकार्षुः । तत्र च कन्यापित्रा सौवीरराजकाशिराजौ स्वभगिनीपती सम्बन्धयोग्याविति चिन्तितौ । अनयोरपि मध्ये देवीभ्रातृत्वेन सौवीरेन्द्रो गुणाधिक इति तत्पुत्रं विष्णुसेनमेव जामातृत्वेन वरीतुं राज्ञो मनीषा आसीत् । परं तु स प्रथममेव पुत्रस्य कारणात्प्रेषितदूतः, "अतिबाला वर्तते कन्या" इति व्यपदिश्य, "समयः प्रतिपाल्यताम्" इति प्रतिसन्दिष्टः पुनरपि काले दूतप्रेषणं नाकार्षीत् । चारपुरुषैश्चावधारितं यत्सौवीरराजः सपुत्रदारः किमप्यदर्शनीयतां गतः ; अमात्याः कार्याणि वर्तयन्ति स्मेति । एवं गते तत्कालसन्निहितः काशिराजदूतः राज्ञो विशेषतः पक्षपातपात्रमभूत् ।

२ अत्रान्तरे कदाचित्सपरिजना राजदुहिता गत्वोद्यानं यथासुखमाक्रीड्य च निवर्तमाना दासीदासहसितकथितश्रवणबृंहितमदेन

निपातितनिहतनिषादिपुरुषेण क्षितिरजोऽवगुण्ठिताव्यक्तमूर्तिना बन्धनपरिभ्रष्टेनाञ्जनगिरिनाम्ना मत्तहस्तिना अभिमुखीभूय परित्रासिता। अथ प्रद्रुतेषु प्राकृतजनेषु हाहाकारमात्रप्रतीकारासु स्त्रीषु कश्चिद्दर्शनीयाकृतिर्दाक्षिण्यवांस्तरुणः हस्तिनाऽभिभूयमानायै तस्यै अभयं प्रदाय निर्विशङ्कमासादितवांस्तं द्विपवरम् । ततः स ललितकरतलताडनप्रकोपितमेनं स्वस्मिन्नभिमुखीकृत्य सुदूरमपवाह्य मुहूर्तमनादरतः प्रियवयस्येनेव तेन व्यालेन निवर्तनानुवर्तनैर्गतिविशेषैः तं विमोहयन् चिक्रीड। अथ राज्ञो मन्त्रिभिर्हस्तिनीभिरुपलभ्य गजशालां प्रवेशितेऽञ्जनगिरौ निवृत्तः स पुरुषः लज्जित इव तेन कर्मणा महाजनप्रशंसामसहमानः समवनतशिरस्कः स्वमेवावासं गतः।

३ तस्य चान्त्यजं स्वमपदिशतः प्रकृतिमन्वयं च परीक्षितुं भूतिकनामा कुन्तिभोजामात्यो व्याप्रियते स्म। परीक्ष्य च यावदुपलब्धमित्थं समर्थयामास— "नायमन्त्यज इति प्रत्येतुं शक्यम्। केनापि कारणेनात्मानमन्वयं चाच्छादयति। यद्येवं मानुषदुर्लभेन रूपेण विप्रनिर्विशेषेण भाषितेन क्षात्रेण तेजसा कुलीनोचितया च सानुक्रोशतया सोऽन्त्यजो भवेत्, व्यर्थोऽस्माकं शास्त्रमार्गेषु परिश्रमः। दृष्टश्च तत्रभवान् सत्पुत्रसम्पन्नस्तत्पिता। स हि व्यायामदृढविपुलोच्छ्रितांसः ज्याघातकिणाङ्कितप्रकोष्ठः प्रभानुमेयो मेघान्तर्गतो रविरिव प्रच्छन्नोऽप्यनुभावलक्ष्यराजभावः विसंवदत्यात्मनो व्यपदेशमाकृतिमहिम्ना" इति। तस्माच्च श्रुताखिलवृत्तान्तो राजा

बहुमानाश्चर्यहर्षाकुलः, "परार्थमनवेक्षितशरीरो लोकोत्तरसत्वः स उदारकर्मा महापुरुषस्तत्वतः कीदृशो भवेत्" इति विचिकित्सन् मन्त्रिणः, "पुनरपि निपुणं परीक्ष्यावधारयत" इत्यादिदेश।

४ वस्तुतस्त्वसौ युवा विष्णुसेन एव ; यः काशिराजमहिष्यां सुदर्शनायामग्निदेवेनोत्पादितः तया च सद्योमृतप्रसवायाः स्वभगिन्याः सौवीरेन्द्रपत्न्या रहः समर्पितः । यश्चामानुषवीर्यबलो बाल एव सर्वलोकोत्सादनकेलीकुतूहलमविरूपधारिणमसुरं मारयामासेति अविमारकनाम्ना पप्रथे। स किल चण्डभार्गवनाम्नो महर्षेः शापमहिम्ना वर्षभोग्यं चण्डालच्छद्मना प्रच्छन्नवासं प्राप्तवतः पितुः प्रत्यनन्तरीभवन् कुन्तिभोजस्य नगरोपान्तमध्युवास।

५ तस्मिंश्च हस्तिसंभ्रमदिवसे यदा स्वविक्रममाविष्कुर्वन्नसौ अनवद्यसर्वाङ्गीं कुरङ्गीं दृष्टवान् तदा प्रभृत्येवोपारूढमदनः भृशमुन्मनायमनोऽन्यादृशः संवृत्तः । तस्यानन्यरतेश्चेतोहारिणीं तां हरिणीदृशं सङ्कल्पशतैरुल्लिखतः कल्पकल्पं दिवसमपि कृच्छ्रेण क्षिपतः सन्तुष्टनाम्नोऽवस्थासहायस्य निजवयस्यस्यापि गोष्ठी न चित्तविनोदाय प्रबभूव । तामेव च हस्तिकरशीकरशीतलाङ्गीं भयाकुलविलोलविषण्णनेत्रां बालां स्वप्नेषु नित्यमुपलभ्य पुनर्विबुद्धो जातिस्मरः प्रथमजातिमिवोत्कण्ठाविक्लबः सस्मार । "अहो तस्या रूपसम्पत् रूपानुरूपं यौवनं, यौवनसदृशं सौकुमार्यम् । किंन्वियम् असामान्यसुन्दरीजनसर्गप्रतिच्छन्दो विधातुः । किंन्वियं सा पद्मा पुरुषोत्तमं

विहायेहावतीर्णा । अहो सर्वेषां स्त्रीगुणानामेकत्र समवायः ।" इत्येवं चपलस्याविजय्यस्य मनसः पारतन्त्र्यमुपगम्य सततं ध्यायन्नास्त ।

६ राजदुहितापि प्राणदातुस्तस्य दर्शनक्षणोद्भिन्नेन सङ्कल्पयोनिना क्षिप्रमप्रतीकारां कामपि दशां समारोपिता नेच्छति स्म मण्डनं, नाहारमाद्रियते स्म, न रेमे सखीजनेन, दीर्घं निशश्वास, विविक्ते रुरोद, असम्बद्धमकथयत, कथितं नाभिजज्ञौ, रोगमपदिदेश, तन्वी बभूव, पाण्डुतामगच्छत् । गूढमिङ्गितवेदिभिः सखीजनैरनङ्गतापपिशुनान्यवस्थान्तराण्युपलक्ष्य रहसि परिपृष्टापि सा लज्जया भयेन कुलमानेन बालभावेन चैकस्या अपि किञ्चिन्नावोचत् ।

७ एवमतिशोचनीयामवस्थामकुलीनं कमपि युवानमन्तरेण वामशीलेन मदनेनानुप्रापितां कुरङ्गीमनुकम्पयन्त्यपि राजकुलदूषणाद्बिभ्यती सनलिनिका धात्री, यदा अशक्यप्रतीकारामापदसेनां मत्वा खिद्यते स्म तदा, "कुलगतशङ्कां त्यक्त्वा साध्यतां यथेप्सितम् । कुलं चास्य प्राप्तकाले श्रोष्यसि" इति अशरीरा कापि वाणी समुल्ललास । सञ्जातप्रत्यये च ते प्रहृष्टे सत्वरमविमारकमुपगम्य चतुरैर्वचनोपन्यासैः कुरङ्ग्यास्तत्समावस्थतां बोधयित्वा तस्यामेव निशायां तस्य निगूढं कन्यापुरप्रवेशमभ्यचोदयताम् ।

८ स चौषधमुपलभ्येवातुरः प्रमुदितमनाः धात्र्याः सकाशादवधारितराजगृहसन्निवेशः, "प्रतीक्ष्यतामर्धरात्रः" इति तां विसृज्य

अस्तमिते गभस्तिमति वयस्येन सन्तुष्टेन सह गुरुजनालक्षितो वास-गृहान्निष्क्रम्य नगरं प्राविशत् । तत्र च यावत्प्रदोषापगमं कुत्र-चित्कालं प्रतिपाल्यानन्तरं, "बहुदोषो रात्रौ छन्नः परगृहप्रवेशः । मा भवान् जीवग्रहणमुपगच्छतु विषमशीलानां कुन्तिभोजामात्यानाम ।" इति स्नेहाद्दर्शितशङ्काकातर्यं मित्रं ब्राह्मणं कथञ्चिदनुमान्य विरचित-चोरवेषः खड्गं रज्जुं चादाय पिण्डितान्धकारभीमं रथ्यामार्गमवातरत् ।

९ पर्यटंश्चासौ कौतुकेन कालरात्रिप्रतिभये तस्मिन्नर्धरात्रे, प्रसादोन्मुखविविधलीलावतीविलासमुग्धयुवजनासेवितहर्म्याग्रभूमि-कासु प्रकामविशालासु प्रतोलीषु, तत्क्षणसन्धुक्षितहृच्छयार्दितस्त्वर-माणः राजकुलमासाद्य कपिशीर्षकावबद्धया रज्ज्वा प्राकारमुल्लङ्घ्य यथोद्दिष्टमार्गेण कन्यापुरप्रासादमाससाद । तत्र च जामातृत्वेन निश्चितं काशिराजपुत्रं जयवर्माणं स्वपुरीमेवानेतुं महाराजेन प्रेषितो भूतिकः प्रस्थित इति तद्भृत्यवर्गः सर्वोऽपि कन्यापुररक्षणे किमप्यव्यग्रो बभूव । प्रासादोऽपि काष्ठकर्मबहुलतया समासन्नजालवत्त्वाच्चाविमारकस्याक्लेशा-रोहिणीयोऽभवत् । ततो विघट्टितजालयन्त्रस्तद्भवनं प्रविष्टः स वीरः संहृत्य रौद्रवेषं विमुच्य च कक्ष्याबन्धं निजागमनं प्रतीक्षमाणां नलिनिकामुपासरत् ।

१० अत्रान्तरे, सखीजनसल्लापेषु जयवर्मणे स्वमुद्दिष्टं निश-म्योद्विग्ना, "अहमात्मनः प्रभवामि" इति निश्चिन्वत्यपि, नलिनिका-मुखात् प्रियजनाभिसरणमवगत्य आभिजात्येन अप्रगल्भत्वेन च

चारित्रभ्रंशचकिता किमपि परिप्लवहृदया कुरङ्गी दारुणेन मनोहरेण च मन्मथसन्तापेन कामप्युन्माददशामरोपिता मोहनिद्रामुपगता आसीत्। तस्याः पादकमले संवाहयन्ती नलिनिका अविमारकं निशाम्य स्वागतेन प्रत्युद्गम्य च कुरङ्गीशयन उपावेशयत्। ततः किञ्चिदिव प्रबुद्धाऽनङ्गज्वरपरवशा कुरङ्गी शून्यहृदयेन— "नलिनिके किं तेन निरनुक्रोशेन भणितम्" इत्यालप्य, अनुपदं "हं परिभ्रष्टास्मि" इति भयविह्वलिता संकुचन्ती, अवस्थानुगुणं परिचरन्तीं नलिनिकां सस्नेहबहुमानमालिङ्गितुमिच्छन्ती शयनोपविष्टमविमारकं बलादाकृष्यालिलिङ्ग। बुद्ध्वा च मतिविभ्रमं संभ्रान्ता, "हा धिक्! हीनं चारित्रम्" इति भयेन वेपते स्म। अथ लज्जया परिचयं परिहरन्तीं भयेन विह्वलाम् अनुरागेण चोन्मुखीं कुसुमपलाशपेशलाङ्गीं कुरङ्गीदृशमेनां ललितसुभगैर्विदग्धोपचारैर्यथासुखं रमयन् अनृणो यौवनस्याविमारकः कियन्तंचित् कालमलक्षितः कुन्त्यापुर एव उवास।

११ एवमनुरक्तरमणीसंभोगरमणीयं सुखेन संवत्सरमेकं क्षणमिव क्षिपतोऽस्य विधिना निर्भरमसूयतेव महानन्तरायः समुपस्थापितः। को हि नाम लोकेऽस्मिन्नविच्छिन्नधारं सुखसंपातमनुभवितुमर्हति। यदा किल दुहितुर्वृत्तान्तमन्तरेण सञ्जातशङ्कः कलुषितो राजा शुद्धान्तस्य विशेषेण रक्षाविधिं व्यधित्सत, तदाप्रभृत्यविमारकस्य तत्रावस्थानं दुष्करमभूत्। असमग्रपरिचितास्वादां निसर्गभूतैर्निजविलासैः प्रतिक्षणं नूतनामिव हृदयहारिणीं दयितां तां सहसा

परित्यक्तुमनीश्वरोऽप्यसौ निजशरीरं कुलमानं च रक्षितुं सद्योऽपसरण-मन्तरा किमप्युपायान्तरमपश्यन् अग्निना भगवता पुत्रस्नेहेन प्रच्छादितो गूढं कन्यापुरान्निरगात् ।

१२ निर्गतश्चाविमारकः अप्रतीकारगुरुकेण विरहसन्तापेन दग्धहृदयस्तामेव प्राणसमामनुभूतमुक्तामसुलभपुनर्दर्शनामनुध्यायन्, "नूनं मदपेक्षया सापि प्राणांस्त्यक्ष्यति । तया विरहितस्य मम जीवनं न केवलं दुष्करं किं तु कृतघ्नभावेनापि गर्ह्यते" इति निश्चित्य प्राणपरित्यागेन दुःखसागरं लङ्घितुकामः पर्वतशिखरमारुरोह । स तत्र मदनानलेनान्तर्बहिश्च निदाघसमयप्रचण्डेन चण्डभानुना दह्यमानः सञ्जातमूर्छः पतन् किमनेन जीवन्मरणेनेति क्षणमप्यतो दुर्भरं भारभूतमात्मनो देहं कान्तामेवानुस्मरन् दवाग्नौ चिक्षेप । भगवांस्तु विभावसुः मलयचन्दनशीतलो भूत्वा निर्वेदतप्तं निजतनयं ज्वालाभिः परिषस्वजे । तद्दृष्ट्वा विस्मितोऽविमारकः पुनर्भृगुपतनेनात्मघातं कर्तुमयतत ।

१३ तदानीं कोऽपि विद्याधरो निजकान्तया सह प्रातर्मन्दरकन्दरेष्वामोदितयौवनो हिमवतः शोभया ततः संप्रलोभितदृष्टिः मध्याह्नसुखावहं शीतचन्दननिलयं मलयमभिप्रस्थितो नभसि प्लवमानस्तस्मिन्नेव पर्वतशृङ्गे विश्रमितुमवातरत् । स कान्तया सह सलीलं तत्र पुष्पापचयं कुर्वन्नमर्त्यनिर्विशेषाकृतिमविमारकं विलोक्य, "किमयं विद्याधरो मन्त्रभ्रष्टः, कुतः खलु रूपमीदृशमन्येषाम्" इति चिन्तयन्विस्मयाविष्टः

प्रष्टुमुपासदत् । अविमारकोऽपि सहसा तं दृष्ट्वा विस्मितः, "किन्नु खलु स्वप्नो मयानुभूयते । किमुत तदन्तकाले यन्मनुष्याः पश्यन्ति" इति विशङ्कमानः पुनः स्थिरीकृत्यात्मानं, "भोः कतमकुलान्वयो भवान्" इत्यपृच्छत् । ततो विद्याधरः, "श्रूयताम्— अहं मेघनादो नाम विद्याधरः । इयं तावदस्मत्कुटुम्बिनी सौदामिनी नाम । अद्य भगवन्तमगस्त्यमाराधयितुं मलयपर्वते विद्याधरैरुत्सवः समारब्धः । तत्रावामपि सङ्केतितौ । इह मुहूर्तं विश्रम्य गमिष्याव इत्यवतीर्णौ । एषोऽस्माकं वृत्तान्तः ।" इति निवेद्य पुनरप्राक्षीत्— "अथ किमर्थमिदानीं भवान् क्षितितलं देवलोकीकरोति । किमर्थमेकाकी चेहागतः" इति । तदानीं "किं नु खलु वक्ष्यामि" इत्याकुलहृदयमधोमुखं तिष्ठन्तमविमारकं प्रेक्ष्य मेघनादः "भवत्वहमेव ज्ञास्यामि" इत्यवधार्य प्रणिधानमास्थितो विद्यामावर्तयामास । विदिताखिलरहस्यश्च भागधेयवैषम्यमुपगते तस्मिन् जातानुकम्पः, "सापि च तत्र जीवन्मरणमनुभवति तपस्विनी । अहमनयोरर्थे सहायो भविष्यामि" इति चिन्तयंस्तमभ्यभाषत । "भोः अविमारक, सकला च भवतोऽस्माभिरवस्था विदिता । अद्य प्रभृत्यावयोः सख्यमस्तु । कन्यापुरमज्ञातमेव प्रवेष्टुमस्त्युपायः । गृह्यतामङ्गुलीयकमिदम् । अनेन दक्षिणाङ्गुल्या धार्यमाणेनादृश्यो भवसि । वामाङ्गुल्या प्रकृतिस्थः । अपि चान्तर्हितस्पृष्टस्तत्स्पृष्टश्चान्तर्हितौ भवतः" इति । निदर्शितं च तेनाङ्गुलीयकप्रभावमालोक्याविमारको हर्षाकुलो विसिष्मिये, "एते खलु लोके

सुखिनो नाम—

ये सञ्चरन्ति गगने वनितासहायाः
क्रीडन्ति पर्वततटेषु कृतोपदेशाः ।
सर्वं विदन्त्यपि च मन्त्रकृतैः प्रभावै-
रन्तर्हिताश्च विवृताश्च सुखं चरन्ति ॥

इति । ततो गृहीत्वाङ्गुलीयकं दिव्यं स्वभावं समुपागतं स्वं मन्यमानः, "प्रविष्ट एवास्म्यनेन कन्यापुरम्" इति प्रहृष्यन् तमव्याजसुहृदं विद्याधरमभिवन्द्य, "वशीकृतविद्यानां भवद्विधानां किमस्माभिः प्रतिकर्तुं शक्यम । सर्वथा जीवितसंप्रदानात्क्रीतोऽहं तव भृत्यः" इति अच्छलमुदीर्य स्नेहेनानुबध्यमानं तं दयितासहायं यथेष्टगमनाय विससर्ज ।

१४ अथ नगरगमनाय कृतत्वरः स पर्वतकटकादवतरन् मध्येमार्गम् आत्मानमन्वेष्टुं सर्वलोकपरिभ्रमणकृतव्यवसायेन निज-जीवितनिर्विशेषेण परिश्रान्ततया पादपच्छायाप्रसुप्तेन वयस्येन सन्तुष्टेन समगच्छत । उभावप्यङ्गुलीयकप्रभावतिरोहिताकृती कन्या-पुरप्रासादमश्रमेण विविशतुः ।

१५ आनिर्गमनात्प्राणसमस्य सुदूरारूढेन मदनसन्तापेन विलुलितायाः कुरङ्ग्याः सर्वतो निरुत्सवोऽभूज्जीवलोकः । अथ निदाघान्ते प्रवृत्ते वियोगिदारुणे वर्षासमये तत्कालवल्लभैर्वकुलसरल-सर्जार्जुनकदम्बनीपनिचुलप्रभृतिभिः सखीजनानीयमानैः सुरभिभिः

सुमनोगणैरुन्मादिता, निदर्शितताण्डवपाण्डित्यैः शिखण्डिभिरुद्विग्ना, सुशिक्षितशारिकोपक्रान्तवृत्तान्तकथनमपि शल्यवेधं मन्वाना, स्वनिर्वेदमजानतो रोगावस्थां प्रष्टुमागतस्य परिजनस्य चासकृन्निर्बन्धमसहमाना, विविक्ते यावच्छक्यं हृदयविलोभनमिच्छन्ती सा नलिनिकाद्वितीया प्रासादशिखरमारुरोह।

१६ तत्रापि पुनर्विद्युत्प्रदीपेन कालमेघेनोत्त्रासिता, निर्दयेनानङ्गेन संकल्पितैः कुसुमसुकुमारैरङ्गकैः सीदन्ती, निश्वासमात्रलक्ष्यजीविता, सव्यकरालम्बितमुखकमला, अश्रुपूर्णनयना निश्चलोर्ध्वदृष्टिर्निध्यायन्ती, "किमनेन जीवन्मरणेन" इति निर्वेदात् प्राणपरित्यागव्यवसितमतिः, चरमं सखीप्रणयं कर्तुकामा सापदेशं नलिनिकामालिङ्गन्ती, "शीघ्रमाकाशतोयस्नानमुपकल्पय" इति व्याजमुक्त्वा निर्गमनाय व्यसृजत्। अथ च मातुर्वचनेन, "कीदृशी संप्रति शीर्षवेदना" इति प्रष्टुमागतां हरिणिकां, "निवेदय भर्त्र्यै अद्य विगतरोगा स्वस्था भवतीति" इति वचनेन प्रतिनिवर्त्य, पश्यति निगूढं शङ्काकुले ससन्तुष्टेऽविमारके, दीर्घमुष्णं निश्वसती साश्रुनयना, त्रासविलोलं परितो मुहुर्वीक्षमाणा, उत्तरीयवसनमात्मनः कण्ठ उद्बध्य यथाव्यवसितं कर्तुमयतत।

१७ अथ तस्मिन्नवसरे सहसोत्थितं मेघस्तनितं श्रुत्वा संत्रासवेपिताङ्गी सा कुरङ्गीदृक् परित्रातारं शब्दायमाना विह्वला भूमौ पपात। तत्क्षण एवाविमारकोऽङ्गुलीयकं वामाङ्गुल्यां प्रक्षिप्य सरभसमुपासीदन्, "कान्ते, न भेतव्यं, न भेतव्यं" इति तामुत्था-

र्याश्वासयामास । उवास च पुनरन्तःपुरेऽलक्षितचरोऽविश्लिष्ट-कामिजनोपभोग्यं जलदसमयं निर्विशन् नवनवैर्हरिणीदृशो विभ्रमविशेषैः कृतार्थीकृतमनसिजः ।

१८ अत्रान्तरे, दुहितुरुद्वाहमन्तरेणानारतं चिन्तयाऽऽयस्यमानः कुन्तिभोजश्चिरेणापि सौवीरराजकुटुम्बकप्रवृत्तिमलभमानः काशिराज-पुत्राय जयवर्मणे कन्यकां प्रतिश्रुत्यामात्यभूतिकेन सजननीकं तमानाय्य राजकुलेऽवस्थापयामास । उद्दिष्टश्चाभवदव्यवहितः शोभनो दिवसः सांवत्सरिकैः । महिषी तु पुनर्निजसोदरसूनोर्विष्णुसेनस्य वार्तामज्ञात्वा जयवर्मणे दारिकां दातुं नेच्छति स्म ।

१९ एवं गते, सौवीरामात्यैः कुन्तिभोजाय सन्दिष्टम्—"अस्माकं स्वामी युष्मन्नगरे सपुत्रदारः संवत्सरमेनं प्रतिवसतीति गूढपुरुषैरवगम्यते । तत्परीक्ष्यताम्" इति । अथान्वेषणे कृते सभूतिकस्य राज्ञश्चरितसंवत्सरव्रतत्वात्सुचेतनाद्वितीयः सौवीरेन्द्रः प्रकाशतामयासीत् । आबाल्यादुपचितवयस्यभावयोरनयोश्चिरस्य समागमेन प्रहृष्टयोरपि तस्मिन्वत्सरे किमप्यदृश्यतां गतस्याविमारकस्य चिन्तया बलवती मन्युपीडा समजायत । तदा पुत्र-स्नेहविक्लवो विषण्णः सौवीरराजो निजवयस्यं प्रत्यभाषत— "अनुपमबलवीर्यरूपशाली यद्यविमारकोऽद्य तव चरणरजोरञ्जितालकः प्रणतिं कुर्यात् को नु स्यान्मद्विशिष्ट इदानीं भुवनतले स्निग्धस्य भवतो दर्शनेन समुद्गलतीव बाष्परूपेण हृदयस्थो मम शोकः । हर्षकालेऽप्यस्मिन्नतश्चेतो न मे प्रसीदति । क्रियतां यथाशक्ति

चारपुरुषैः परितो विचयनम्" इति। भूतिकस्तु "सुपरीक्षिताः सर्वे चारगोचरा देशाः। न क्वापि दृश्यते कुमारः। नूनं स मायामनुतिष्ठतीति प्रतिभाति" इति सवितर्कं न्यवेदयत्।

२० एवमप्रतिपत्तिमूढे ताम्यति राजकुले स भगवान् विघटनघटनापटुर्नारदः सुयोधनकुले वत्सलतया विशेषतः कुन्तिभोजेऽप्यनुकम्पित्वेनाविर्भूय प्रतिगृह्य च भक्त्युपपादितं सत्कारं व्याकुलयोः सौवीरराजकुन्तिभोजयोरन्तः पुरस्थं कुरङ्गीरमणं कुमारमाचचक्षे। तदा, "लज्जित इवास्म्यनेन वृत्तान्तेन। केन दत्ता, कुतः परिचयः, कथं चायं प्रविष्टः कन्यापुरम्।" इति अपवादभयाद्विमनायमानं कुन्तिभोजमाह महर्षिः—

"दत्ता सा विधिना पूर्वं दृष्टा सा गजसंभ्रमे।
पूर्वं पौरुषमाश्रित्य प्रविष्टो मायया पुनः॥" इति।

२१ अथ महर्षिणैवानुमोदिते स्वदुहितुर्गान्धर्वविधिना विवाहे कुन्तिभोजो निष्प्रतिवचनो बभूव। परं तु, "त्वत्पुत्राय जयवर्मणे कन्या प्रदीयत इत्यानीता सुदर्शना कथं समाधातव्या" इति पृच्छति कुन्तिभोजे, नारदः सुदर्शनां रहस्याहूयेत्थमबोधयत्— "ननु स्मरस्यविमारकोऽप्ययग्निदेवादुत्पन्नोऽग्रजस्ते सुतः। अमानुषबलवीर्योऽसौ हस्तिसंभ्रमदिवसे कुरङ्गीं दृष्ट्वा जाताभिलाषः प्रथमं पौरुषमाश्रित्य तदनु मायया च तया सङ्गम्याभिरमते। कथमिदानीं ज्येष्ठपत्नी कनीयसे दीयते। सुदर्शने! अभिधीयतां काशिराजाय, जयवर्मणः कुरङ्गी वयसाधिकेति। नन्वस्ति कुरङ्ग्याः कनीयसी

सुमित्रा नाम। सा जयवर्मणो भार्या भविष्यति" इति। सुदर्शनापि परितुष्टा तदभ्युपजगाम।

२२ अथ महर्षिवचनात् स्वजनपरितोषणार्थमभ्यन्तरसमयमात्रमनुरुध्योपाध्यायेन कारितविवाहमङ्गलं सौवीरराजसूनुं कुरङ्ग्या सहानाययामास कुन्तिभोजः। सपत्नीकोऽविमारकः सलज्जमुपसर्पन्महर्षिं गुरुजनं च यथाक्रममभिवाद्य तैरप्याशीर्भिरभिनन्दितः परमां मुदमवाप। ततो नारदः, "विसृज्यतामचिरेण सौवीरराजः स्वदेशगमनाय। जयवर्मणे च सुमित्रा प्रदीयताम्" इत्यादिश्यानुगृह्य च सर्वान् यथेष्टगमनायोदतिष्ठत्। एवं देवर्षेरनुग्रहपूतं सर्वं राजकुलमुत्सवसंकुलमभूत्।



# चारुदत्तचरितम्

आसीदुज्जयिन्यां कश्चिदभिरामगुणोपश्रुतमहिमा रूपयौवनशाली विप्रकुलोद्भवश्चारुदत्तो नाम श्रेष्ठिचत्वरे प्रतिवसन्सार्थवाहपुत्रः । स च समुद्रयानव्यतिकरोपार्जितापरिमितार्थसञ्चयोऽपि वादान्यकेन बन्धुमित्रातिथियाचकेषु व्ययितविभवसारो दरिद्रः समपद्यत । ऋद्धिमनुभूय परिक्षीणस्य दुःखवाह्याऽभवत्तस्याकिञ्चिन्यदशा । उदारमतिः स कुलपुत्रः पारितोषिकप्रदानस्थानेषु मोघीकृतनिजमनोरथप्रसरो निःस्वतया नितरां सन्दानित इव विव्यथे । तदुपकारलब्धोदयमपि सर्वं मित्रमण्डलं शनैरपचितफलात्तस्मादपससार । परं तु तस्य दरिद्रजनदुर्लभं भार्यानुकूल्यं, सुहृदो मैत्रेयस्य सर्वात्मनानुवृत्तिः, अपरिभ्रष्टसत्त्वता चेति समुदितं भाग्यत्रयं सन्तापोच्छित्तये प्रबभूव । लाघवकारिणीमपि रिक्तदशामनुभवन्नसावभङ्गुरावदातैर्निजगुणैः सर्वोज्जयिनीजनाह्लादनमाततान यशोवितानम् ।

२ स कदाचित्कामदेवानुयानावसरे वसन्तसेनां नाम युवजनोन्मादिनीं ललामभूतामुज्जयिन्याः प्रतिनवयौवनोन्मेषमधुरां गणिकादारिकां दृष्ट्वा मनसिजशरशरव्यतामयासीत् । परं तु दुर्विध-

स्यात्मनो गणिकानुरागमाधिमात्रहेतुं पश्यन् यत्नतः प्रतिबध्यानङ्गतारल्यं प्रच्छन्नेङ्गित आस्त। तां च शकारो नाम राजश्यालकः, नृपशुरपि, लक्ष्मीमदेनानुकूलयितुं बहुधा प्रायतत। अभिजनेन केवलं, न पुनर्वृत्तेन, गणिका, वसन्तसेना, श्रियोऽविमुह्यन्ती, तमकुत्सयत। अकामयत चानन्यमनसा शीलपरितोषिणी सुगृहीतनामधेयं चारुदत्तमेव।

३ अथैकदा, षष्ठ्यां नृत्तावसाने, स्वगृहमुपावर्तमानां तां गणिकां, निशामुखनश्यदालोके पुरमार्गे, विटं पुरस्कृत्यानुधावन्नभिकः शकारः, अरुन्तुदैरसंबद्धैरनुचितप्रलापप्रायैरनुनयवचनैः प्रसादयितुमारेभे— "अयि वसन्तसेने, तिष्ठ तिष्ठ। अङ्गारमध्यपतितमिव चर्मखण्डं कामेन संप्रति दह्यते मे शरीरम। सपट्टेन शीर्षेण त्वां प्रसादयामि। भर्तृपुत्रोऽहं कामयितव्यः। अन्यथा दुश्शासनः सीतामिव केशेषु गृहीत्वा त्वामाहरामि। अथवा तीक्ष्णेनासिना शीर्षं ते छित्त्वा त्वां मारयामि। विलपन्तीमपि कस्त्वां परित्रास्यते, किं शवपत्तनेशो वासुदेवः कुन्तीसुतो जनमेजयो वा"— इति। मूर्खमेनमनुवदन्विटोऽपि, उद्विग्नचञ्चलदृष्टिं, सर्वं परिजनमालप्यासन्निहितं दृष्ट्वा, "एकाकिन्यां मयि किमकार्यमेतौ पापौ न करिष्यतः" इति भयेन विह्वलां, व्याघ्रानुसारचकितामिव हरिणीं पुरःपुरः पलायमानां, वसन्तसेनां दर्शितक्रूराध्यवसायैरनुनयेऽपि त्रासकृद्भिः वचोभिरित्थमभ्यर्थयामास।

" तरुणजनसहायश्चिन्त्यतां वेशवासो
विगणय गणिका त्वं मार्गजाता लतेव ।
वहसि हि धनहार्यं पण्यभूतं शरीरं
सममुपचर भद्रे सुप्रियं चाप्रियं च ॥

जनयति खलु रोषं प्रश्रयो भिद्यमानः
किमिव च रुषितानां दुष्करं मद्विधानाम् ।
अनुनयति समर्थः खड्गदीर्घः करोऽयं
युवतिवधघृणाया मां शरीरं च रक्ष ॥ " इति ।

तदा अनिच्छन्तीं निर्बध्नतोरनयोरनयमसहमानेव अपहृतचक्षुरसामर्थ्या रथ्याभ्यन्तरपिण्डीभूता तामसी समजृम्भत । तेन हि वसन्तसेनामपश्यन् शकारः प्राह— "भाव, नष्टा वसन्तसेनिका । कदाचिदुपान्तिकस्थं नयनमात्रसंस्थुलस्य दरिद्रचारुदत्तस्य गृहं प्रविशति दुष्टदासी । तदन्विष्य गृह्यताम्" इति । तच्छ्रुत्वा "महदुपकृतं सूचितप्रियगृहसामीप्येनामित्रेणाप्यनेन वैधेयेन" इति आश्वसती वसन्तसेना स्पर्शलक्ष्यघटनं चारुदत्तगृहद्वारमासाद्य निभृतं स्थिता ।

४ तदानीं चतुष्पथे मातृभ्यो बलिमुपहर्तुं वयस्येन प्रेषितो मैत्रेयः चेट्या रदनिकयाऽन्वीयमानो दीपहस्तो निष्क्रमिष्यन् द्वारमुदजीघटत् । अपावृत एव पक्षद्वारके वसन्तसेना पटान्तेन दीपं निर्वाप्यान्तः प्रविष्टा । तदा तत्क्षणोच्चलितरथ्यानिलस्यैव दोषं

वर्णयन् मैत्रेयः पुनः प्रज्वलयितुं दीपमभ्यन्तरचतुश्शालं प्रविवेश। अत्रान्तरे निष्क्रामन्ती रदनिका वसन्तसेनाबुद्धया शकारेण केशेषु गृहीत्वा बलादाकृष्य भर्त्स्यमाना चुक्रोश । सदीपके च प्राप्ते मैत्रेये वसन्तसेनाविप्रलब्धस्यात्मनोऽविमृश्यकारित्वं बुद्ध्वा दैन्यसंकुचित-वदनः शकारः सचकितं दिशोऽवालोकयत् । पूर्वं चारुदत्ताल्लब्ध-जीवनो विटः तस्य गुणमहिम्नो बिभ्यत् स्वकर्मणो लज्जमानः, मैत्रेयं प्रणामैः प्रसाद्य शकारमनापृच्छ्यैव निश्चक्राम । तदा एकाकिन-मात्मानं दृष्ट्वा अन्तर्भीतः शकारः, मैत्रेयमाहूय, "मया काम्य-माना नाटकस्त्री वसन्तसेना नाम गणिकादारिका सालङ्करणा त्वद्गेहं प्रविष्टा । श्वो न चेन्निर्यातयसि त्वया सह मे दारुणः क्षोभो भविष्यति" इति तन्मुखेन चारुदत्तस्य संदिश्य सत्वरमपा-क्रामत् ।

५ अत्रान्तरे असन्निहितदीपत्वादालोकविधुरे गृहैकदेशे स्थितः शिथिलितसमाधिश्चारुदत्तः स्वधृतं प्रावारकं चतुश्शालं नाययिष्यन् रदनिकाबुद्ध्या वसन्तसेनां प्रैरयत् । सा च तद्गृह्णती, "अभागि-न्यहमभ्यन्तरप्रवेशाय" इति मत्वा जोषमास्त ; येन चारुदत्तश्चेटीवृत्तेन विसिष्मिये । तदा रदनिकाद्वितीयो मैत्रेयः प्रविश्य शकारसन्देश-मचकथत् । दर्शयामास च तद्भीतिप्रविष्टां वसन्तसेनाम् । अथोपसृत्य वसन्तसेना चारुदत्तमभिवन्द्यावसरप्राप्तमित्थमूचे—"आर्य ! शरणा-गतास्मि । अलङ्करणनिमित्तं पापा मामनुसरन्ति । तदत्रैव भाण्डानि निक्षिप्य आर्येण रक्षिता गेहं गन्तुमिच्छामि" इति । चारुदत्तः

सप्रणयं पुनर्दर्शननिमित्तभूतं तस्या अलङ्करणन्यासमभ्युपगम्य मैत्रेयरक्षितां तां गृहगमनाय विससर्ज।

६ तदुपक्रमं सा गणिका चारुदत्तमन्तरेण बलवदुत्कण्ठिता निसर्गपेशलेन मनसा सुदूरारूढां मदनबाधामुवाह। तथा हि—स्वमनोरमणगतया चिन्तया विडम्ब्यमाना यत्पारवश्येनाजल्पत् तत्रानुपदमेव सखीभिः पृष्टा किमपि न सस्मार। निरस्ताखिल-मण्डना स्नानाशनादिष्वप्यनास्थया शून्यहृदयेनावर्तत। सर्वदैव चारुदत्तस्य गुणान् सख्यनुमोदिता गृणती कृच्छ्रेण कालमक्षिपत्। चित्रफलके रहस्तत्प्रतिकृतिमालिख्य सस्नेहं निभालयन्ती उत्कण्ठां व्यनूनुदत्। तत्सम्बन्धिनं तद्गुणानुश्रावकमपि जनमात्मीयं मत्वो-पचचार। तथा च, कश्चिद्विभवमन्दतया चारुदत्तस्य निराश्रयमा-हिण्डमानं संवाहकं द्यूते दशसु सुवर्णेषु पराजितमुत्तमर्णानुद्रुत-मनुकम्प्य ऋणान्मोचयामास। स्वप्रसादार्थिना राजश्यालकेन पदे पदे प्रेपितानां परिच्छदविशेषाणां निवेदयितृकायापि सखीजनाय नितरामसूयति स्म। "चारुदत्तः कथमभिसर्तव्यः, कथं वा तस्य समागमोऽविच्छिन्नं सुलभः संपद्येत" इति विचिन्तयन्ती सदा तस्थौ।

७ अत्रान्तरे दाक्षिण्येन न्यासमङ्गीकृतवतो दरिद्रस्य चारुदत्तस्यासुरक्षिते गेहे महार्हाणामाभरणानां रक्षणे आयास इवाभवत्। तेन हि, व्यवस्थया, षष्ठ्यां सप्तम्यां च रदनिकया स भाण्डजातं धारयामास। अष्टम्यां तु रदनिका गान्धर्वश्रवणान्निशार्ध-

प्रतिनिवृत्तस्य निद्रोत्सुकिनो मैत्रेयस्य हस्ते, "अद्य खलु त्वय्यायत्तेऽस्य रक्षाभरावृत्तिः" इति समर्प्य न्यवर्तत। मैत्रेयो निर्बन्धवशात्तदश्रद्धया गृहीत्वा तूर्णं निद्रापरवशो बभूव।

८ अथ सज्जलको नाम कश्चित्साहसिको विप्रकुलीनोऽपि वसन्तसेनापरिचारिकायां मदनिकायां जातानुरागतया तन्निष्क्रयणमूल्यं चौर्येणापि निष्पादयितुकामः तस्यां निशायां पर्यटन् भवनप्रत्ययात् चारुदत्तगृहमेव सन्धिच्छेदं विधाय प्राविशत्। विचित्य च परितः स द्रव्यविशेषं कञ्चिदनासादयन् खिन्नः, "किन्नु खल्वागन्तुकत्वादविदितसमृद्धिविस्तरो दरिद्रगृहं प्रविष्टोऽस्मि। अथवा, यदभिजातो भवनविन्यासः, न चात्र कश्चित्परिच्छदविशेषः, तदनुभुक्तप्रनष्टविभवेनानेन भवितव्यम्। न खलु तुल्यावस्थः कुलपुत्रः पीडयितव्यः। तदितो गच्छामि" इति यावन्निववृते, तावत्, चारुदत्तमभिभाषमाणो मैत्रेय उत्स्वप्नयामास—"भोः! गृहाणैतत्स्वर्णभाण्डम्। मम ब्रह्मत्वेन शापितोऽसि, यदि न गृह्णासि। एष दत्वा विक्रीतभाण्ड इव वणिक् सुखं स्वप्स्यामि" इति। अथ सज्जलको निपुणं निरूप्य जर्जरप्रावारकैकदेशे निबद्धं छिद्रप्रसृतकिरणावलीभासुरम् अलङ्करणं दृष्ट्वा, "सुखं स्वपिहि महाब्राह्मण" इति वदन्नादाय पटहशब्दसूचितायां प्राभातिकवेलायां सत्वरमपासरत्।

९ प्रगे प्रचलिता रदनिका भित्तौ सन्धिमार्गमुपलक्ष्य संभ्रान्ता साक्रन्दमुपगम्य चारुदत्तमैत्रेयौ प्राबोधयत्। उभावपि

यावदुत्थाय पर्यपश्यतां तावन्मुष्टं न्यासभाण्डं बुबुधतुः । मैत्रेयः ससम्भ्रमं, "मन्ये मया मन्दभाग्येन कुम्भीलकस्यैव हस्ते तत्समर्पितं, न पुनश्चारुदत्तस्य" इति निश्चित्य विषण्णोऽतिष्ठत् । तदा चारुदत्तः स्वशीलदोषे लोकं मुखरयिष्यन्तममुं विपाकमनुचिन्त्य पर्यदेवयत ।

"कः श्रद्धास्यति भूतार्थं सर्वो मां तुलयिष्यति ।
शङ्कनीया हि दोषेषु निष्प्रभावा दरिद्रता ॥" इति ।

१० एवमाकुलीभूतं भर्तारमवगत्य चारुदत्तब्राह्मणी भृशदुःखिता भर्तृप्रत्ययरक्षणप्रवणेन मनसा, "स्वेन दत्तमत्युदारो न गृह्णीयात्" इति मैत्रेयमुपह्वरे आनाय्य ब्राह्मणपूजामपदिश्य स्वज्ञातिकुलोपार्जितां शतसहस्रमूल्यां रत्नावलीं तस्मै प्रादात् । स च तदादाय जानन् गृहीत्वा चारुदत्तं विज्ञापयामास— "भोः सदृशदारसंग्रहस्यैतत् फलं परिगृह्यताम्" इति । अभिमानी चारुदत्तः, "कथं ब्राह्मणी मामनुकम्पते । कष्टम् । इदानीमस्मि दरिद्रः यत्परिक्षीणभाग्यस्य मे स्त्रीद्रव्यमप्यादरणीयमभवत्" इति शोचन् वसन्तसेनायै न्यासप्रतिनिधित्वेन रत्नावल्या उपढौकनाय मैत्रेयमन्वजानात् ।

११ सज्जलकस्तु प्रभात एव चोरितमलङ्करणजातमादाय वसन्तसेनागृहमुपाययौ । दृष्ट्वा च विजने मदनिकां न्यवेदयत् तस्याः कृते समनुष्ठितं साहसम् । अत्रान्तरे उपरि भूमिकायां वातायननिष्क्रामितपूर्वकाया वसन्तसेना दिष्ट्या सँल्लपन्तावेतौ निर्वर्ण्य आत्म-

सम्बन्धिनी कथैषेति निभृतमुपश्शृण्वती तस्थौ । अथ मदनिका ताऩ्याभरणानि निपुणं विलोक्य प्राह— "आर्यायाः खल्विमानि, पूर्वं चारुदत्तसकाशे न्यासीकृतानि । तत्किमनुष्ठितं भवता । तत्रैव तावन्निर्यातय । अथवा तस्य सार्थवाहपुत्रस्य वचनेनैव आर्यायै निर्यातय । एवं कृते, त्वं रक्षितः, स च आर्यः अनिर्विण्णो भविष्यति" इति । सज्जलकः कथमपि तदङ्गीकृत्य वसन्तसेनादर्शनार्हमवसरं कामदेवकुले प्रतिपालयामास । वसन्तसेना च सर्वमवधार्य, "पश्यामि किमत्र भविष्यति" इति कौतुकेनाभ्यन्तरं प्रविश्य पूर्ववदासीनाऽभवत् ।

१२ तदानीं चारुदत्तप्रहितो मैत्रेयः प्राप्तः । कृतातिथ्यश्चोपविष्ट उवाच । "तत्रभवता चारुदत्तेन त्वया न्यासीकृतः अलङ्कारः द्यूते हारितः । अतस्तस्य मूल्यभूतामिमां रत्नावलीं प्रतीच्छतु भवती" इति । तच्छ्रुत्वा वसन्तसेना, "धिक् खलु गणिकाभावम् । लुब्धेति मां तुलयति । यदि न प्रतीच्छामि स एव दोषो भवति ।" इति सञ्चिन्त्य तां रत्नावलीं प्रतिजग्राह ।

१३ अथ विसर्जिते मैत्रेये मदनिकाप्रवेशितोऽलङ्कारहस्तः सज्जलकः समुपसृत्य चारुदत्तवचनमपदिशन् न्यासं वसन्तसेनायै प्रत्यर्पयामास । चतुरा वसन्तसेना तन्मुखेन चारुदत्तस्य प्रतिसन्देशं दातुमैच्छत् । स तु, "न खल्वहं तत्र गच्छामि" इति प्रत्युच्य निर्गन्तुं तत्वरे । तदानीं, "तेन हि मन्ये तस्य गृहे साहसं कृत्वा आनीतेनानेन भवितव्यम्" इति वसन्तसेना तन्मर्म व्यवृणोत् ।

तेन च पर्याकुलं तमनुकम्पयन्ती सा मनस्विनी सर्वाङ्गभूषितां कृत्वा मदनिकां तस्य हस्ते समर्प्य, उभावपि दम्पती प्रवहण आरोप्य, सस्नेहबहुमानं यथेष्टगमनाय विससर्ज ।

१४ तस्मिन्नवसरे दुर्दिनमुन्नमितं दृष्ट्वा अविलम्बसहेन मन्मथेनोपदिश्यमानमार्गा तामेव रत्नावलीं निर्यातनीयामपदिश्य चारुदत्तमभिससार वसन्तसेना । ततःप्रभृति तावुभौ रतिमन्मथाविव चतुरिमोल्लसितनिरन्तररतिकेलिरसास्वादसुखितौ क्षणमिव क्षपाशतमनेषाताम् ।

इति चारुदत्तचरितम् ।
समाप्तश्चायम् उत्तरार्धः ।

---

## निगमनम्

वल्लास्वादरसोर्मिला भणितयः प्रज्ञावतां यद्गुण-
ज्योत्स्नापूरविभावनाव्यतिकरान्निर्यान्ति सन्धुक्षिताः ।
यातेभ्यो मनुजेषु देवगणनां तेभ्यो निसर्गाज्जग-
न्नेतृभ्यश्चरिताधिवासितदिशान्तेभ्यो महद्भ्यो नमः ॥ १ ॥

कुले महत्यप्पयदीक्षितानां वाग्देवतानित्यविहारभूमौ ।
विपश्चितो यज्ञकवेः सुतोऽस्मि कविर्महालिङ्ग इति प्रतीतः ॥ २ ॥

सच्चरितवासलोभाद्रसवत्सन्दर्भचर्वणप्रीत्या ।
निजवाक्छुद्ध्यै च मया भासकथासङ्ग्रहो व्यरचि ॥ ३ ॥

सद्भावदर्शितगुणप्रणयेन येन
चन्द्रायितं कुमुदिनीपदवीजुषोऽस्याः ।
त्यागाभिधाय सुहृदे गुरुगौरवेण
तस्मै प्रकृष्टरुचये कृतिरर्प्यते नः ॥ ४ ॥

निर्व्याजेन निरञ्जनेन मनसा स्वप्रत्ययं मानयन्
धीरो यः प्रणयी गुणेषु वहति स्वच्छन्दमुच्चैश्शिरः ।
तस्यास्वादविदः प्रसादसुधया नीरन्ध्रमाप्यायितं
कर्मेदं परिचीयमानसुषमं ख्यातिं परां विन्दतु ॥ ५ ॥

श्रीमान्पञ्चमजार्जभूपतिरिमामार्यान्वयाधिष्ठिता-
मार्ये वर्त्मनि वर्तयन्नविकलं पृथ्वीं चिरं शास्तु नः ।
दुष्कालव्यतिषङ्गदुर्गतधियां संरम्भपांसूत्कर-
प्रादुष्योपशमं तनोतु भगवानाराच्च नारायणः ॥ ६ ॥

इति श्रीमद्भरद्वाजकुलजलधिकौस्तुभ श्रीमदद्वैतविद्याचार्य चतुरधिक-
शतप्रबन्धनिर्वाहक श्रीमदप्पय्यदीक्षितेन्द्र वंशमुक्ताफलानां
राजुशास्त्र्याख्याविख्यात महामहोपाध्यायश्रीत्यागराज-
मखिराजानां प्रपौत्रस्य, महामहोपाध्याय महोपदेशक-
शास्त्ररत्नाकरादिबिरुदाञ्चित पण्डितप्रकाण्ड-
श्रीयज्ञेश्वरकविसूनोः श्रीमन्महालिङ्गकवेः

कृतिषु

ः सम्पूर्णः ।

स्तु ॥

